ब्रवीत्। माम किमद्याहारकृत्यं नानुष्ठीयते यथा पुरेति। बक आह। अहं मत्स्यादस्तेनोपाधिना विना युष्मान् ब्रवीमि। मया युष्मानासाद्य पूर्वं प्राणरक्षा कृता। सांप्रतं ममाद्य वृत्तिविच्छेदः। अतोऽहं विमनाः। सोऽब्रवीत्। माम केन कारणेन। बक आह। अद्य मत्स्यबन्धैरेतत्सरःसमीपेनातिक्रामद्भिरभिहितम्। बहुमत्स्योऽयं ह्रदोऽस्मिञ्जालं श्वः प्रक्षिपाम इति। तत्रैकोऽब्रवीत्। नगरसमीपेऽन्ये ह्रदा अनासादितास्तानासाद्यात्र पुनरागमिष्याम इति। तद्भद्र विनष्टा नाम यूयमहमपि वृत्तिछेदादुत्सन्न एवेति शोकेनाद्याहारनिवृत्तोऽस्मि। ततः कुलीरेण मत्स्यानां तन्निवेदितम्। ततः सर्वैर्मत्स्यैर्मिलित्वाभिहितो बको यथा। यत एवापायः श्रूयते तत एवोपायोऽपि लभ्यते। तदर्हस्यस्मान् परित्रातुम्। बक आह। अण्डजोऽहमसमर्थो मानुषविरोधे। किं त्वस्माद्ध्रदादन्यमगाधं जलाशयं युष्मानेकैकशः संक्रामयिष्यामि। ततस्तैर्भयाद्विश्वासमुपगतैस्तात भ्रातर्मातुल मां मां प्रथमतरं नयेत्यभिहितम्। अथासौ दुष्टमतिः क्रमेण तान्मत्स्यान्नीत्वा नातिदूरे शिलातले निक्षिप्यैकैकं भक्षयन् परं परितोषमुपागतः। कुलीरकस्तु मृत्युभयोद्विग्नो मुहुर्मुहुस्तं प्रार्थितवान्। माम मामपि तावदर्हसि मृत्युमुखात्परित्रातुमिति। स तु दुष्टात्माचिन्तयत्। निर्विण्णोऽस्म्यनेनैकरसेन मत्स्यपिशितेन। एतदीयपिशितविशेषमपूर्वमास्वादयामि। ततः कुलीरमुत्क्षिप्य वियति गतः सर्वाण्यम्भःस्थानानि परिहृत्य यावत्तस्यां वध्यशिलायामवतारयितुकामस्तावत्कुलीरकोऽपि पूर्वभक्षितमत्स्यास्थिराशिं दृष्ट्वैवाचिन्तयत्। भक्षिता अनेन दुरात्मना प्रज्ञापूर्वकं ते मत्स्याः। तत्किमधुना प्राप्तकालम्। अथवा

अभियुक्तो यदा पश्येन्न कांचिद्गतिमात्मनः।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह॥ ६२॥

अनभिज्ञोऽपि बकः कुलीरकसंदंशग्रहस्य मौर्ख्यात् कुलीरकसकाशाच्छिरश्छेदमवाप्तवान्। कुलीरकोऽपि मृणालसदृशीं बकग्रीवां गृहीत्वा शनैः शनैर्मत्स्यान्तिकमेव तत्रैव सरस्यागतः। तैश्चाभिहितः। भ्रातः कासौ माम इति। अथासावब्रवीत्। पञ्चत्वमुपगतः। तस्यैतद्दुरात्मनः शिरः। भक्षितास्तेनोपाधिना बहवः स्वयूथ्या वः। सोऽपि मत्सकाशाद्विनष्ट इति।

## इति पञ्चमी कथा समाप्ता ।

अतोऽहं ब्रवीमि । भक्षयित्वा बहून्मत्स्यानिति । अथ वाय जम्बुकमाह । आवयोः किं प्राप्तकालं मन्यसे । असावाह । कस्यचि निकस्य राजामात्यादेः सुवर्णसूत्रमादाय तस्य कोटरे स्थाप्यताम् । त वृक्षवस्तं कृष्णसर्पं व्यापादयिष्यन्ति । इत्युक्त्वा स सृगालोऽपक्रान्तः । अ वायसौ तदाकर्ण्य सुवर्णसूत्रान्वेषिणावात्मेच्छयोत्पतितौ । ततश्च काकी किंचि सरः प्राप्य यावत्पश्यति तावत्तन्मध्ये कस्यचिद्राज्ञोऽन्तःपुरं जलास न्यस्तकनकसूत्रमुक्ताहारवस्त्राभरणं जलक्रीडां करोति । अथ सा वाय कनकसूत्रमेकमादाय वियता शनैरात्मानं दर्शयन्ती स्वमालयं प्रति प्रायात ततश्च कञ्चुकिनो वर्षधराश्च तन्नीयमानमवलोक्य गृहीतलगुडाः सत्व मनुययुः । काक्यपि सर्पकोटरे तत्कनकसूत्रं निक्षिप्य सुदूरतरमवस्थिता अथ राजपुरुषा यावत्तं वृक्षमारोहन्ति तावत्कोटरगतः कृष्णसर्पः प्रसा तभोग आस्ते । तैश्चासौ लगुडप्रहारैर्घातितः । तत्कृत्वा कनकसूत्रमाद यथाभिलषितं स्थानं गताः । वायसदम्पती अपि ततः परं सुखेन वसतः

## इति चतुर्थी कथा समाप्ता ।

अतोऽहं ब्रवीमि । उपायेन हि यच्छक्यमिति । तन्न किंचिदिह बुद्धि मतामसाध्यमस्ति । उक्तं च

यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥ ६३ ॥

करटक आह । कथमेतत् । सोऽब्रवीत् ।

## अथ सिंहशशककथा नाम षष्ठी कथा ।

अस्ति कस्मिंश्चिद्वनोद्देशे मदोन्मत्तो नाम सिंहः । स चाजस्रं मृगोत्सादनं कुरुते । अथ ते मृगाः सर्वे एव मिलित्वा प्रणतचित्तास्तं मृग राजं विज्ञापयामासुः । देव किमनेन परलोकविरुद्धेन स्वामिनो नृशंसेन निष्कारणं सर्वमृगोत्सादनकर्मणा कृतेन । वयं तावद्विनष्टा एव तवाप्य हारस्याभावस्तदुभयत उपद्रवः । तत्प्रसीद वयमेव स्वामिन आहारार्थमे कैकं वनचरं वारेण स्वजातिसमुत्थं प्रत्यहं प्रेषयामः । सिंहेनोक्तम् । एव स्त्विति । ततः प्रभृति प्रतिदिनं तैः प्रेषितमेकैकं मृगं भक्षयन् स्थितः । अ

कदाचिज्जातिक्रमाच्छशकस्य वारः समायातः। स तु सर्वैर्मृगैः प्रेपितश्चिन्तयामास। अन्तकरोऽयं मृत्युमुखप्रवेशः। किमधुना प्राप्तकालं ममेति। अथवा बुद्धिमतां किमशक्यम्। तत्सिंहमेवोपायेन व्यापादयामि। इति। तत आहारवेलातिक्रमं कृत्वा मन्दं मन्दमगच्छत्। सिंहोऽपि क्षुत्क्षामकण्ठः कोपाविष्टो भर्त्सयंस्तमाह। सुक्रुद्धैरपि किं क्रियतेऽन्यत्र प्राणवियोगात्। स त्वमद्य गतासुरेव। कथय कोऽयं तव वेलात्ययः। अथ प्रणम्य सविनयं शशकः प्रोवाच। स्वामिन्नायं ममापराधः। अहमागच्छन्पथि सिंहान्तरेण निरुध्य भक्षितुमुपक्रान्तः। ततो मयाभिहितम्। अहं स्वामिनो मदोन्मत्तस्य सिंहस्य भोजनार्थं गच्छामि। ततस्तेनाभिहितम्। चौररूपी स मदोन्मत्तः। ततस्तमाहूय द्रुतमागच्छ येन यः कश्चिदावयोर्मध्यात् पराक्रमेण राजा भविष्यति स सर्वानेवैतान्मृगान् भक्षयिष्यतीति। अतोऽहं स्वामिनं निवेदयितुमागतोऽस्मि। तच्छ्रुत्वा सिंहः सकोपमाह। कथमन्योऽत्र मद्भुजपरिरक्षिते वने सिंहः। सत्वरं गत्वा मम तं दुरात्मानं दर्शयस्वेति। शशक आह। यद्येवं तदागच्छतु स्वामी तं दर्शयामीति। असावपि शशकस्तं गृहीत्वा विमलजलसंपन्नं महान्तं कूपमत्र तं पश्येत्यदर्शयत्। ततः सोऽपि मूर्खः सिंह आत्मनः प्रतिबिम्बं जलमध्यगतं दृष्ट्वायमसौ सपत्न इति मत्वातिकोपवशात्सिंहनादं मुमोच। ततस्तत्प्रतिशब्देन द्विगुणतरो नादः कूपात्समुत्थितः। अथासौ तं नादमाकर्ण्य शक्ततरोऽयमिति मत्वा तस्योपर्यात्मानं निक्षिप्य पञ्चत्वमुपगतः। शशकोऽपि हृष्टमनाः सर्वान् मृगानानन्द्य तैः प्रशस्यमानो यथासुखं तत्र वने निवसति स्म।

इति षष्ठी कथा समाप्ता।

अतोऽहं ब्रवीमि। यस्य बुद्धिर्बलं तस्येति। तच्छ्रुत्वा करटक आह। यद्येवं तर्हि गच्छ शिवास्ते पन्थानः सन्तु। यथाभिप्रेतमनुष्ठीयतामिति। अथ दमनकः पिङ्गलकसमीपं गत्वा प्रणम्योपविष्टः। तेनाभिहितः। कुत आगम्यते भवता। चिराद् दृष्टोऽसि। सोऽब्रवीत्। देव। आत्ययिकं मन्यमानो भर्त्रे निवेदयितुमागतोऽस्मि। न चायं मनोरथः संश्रितानाम्। किं चोत्तरक्रियाकालविनिपातभीतैर्निवेद्यते। तथा हि।

अनियुक्ता हि साचिव्ये यद्वदन्ति मनीषिणः।
अनुरागद्रवस्यैताः प्रणयस्यातिभूमयः॥ ६४॥

अथ पिङ्गलकः श्रद्धेयवचनत्वात्तं सादरमाह । किं भवान् वक्तुमि-च्छतीति । सोऽब्रवीत् । अयं तावत्संजीवकस्तवोपरि दुग्धमतिः । विश्वासोपगतश्चायं मत्संनिधावाह । दृष्टास्य पिङ्गलकस्य मया सारासारता शक्तित्रयस्य । यत एनं हत्वा स्वयमेवाहं राज्यं ग्रहीष्यामीति । एतच्च वज्राशनिदुःसहतरं वचनं श्रुत्वा क्षुभितहृदयः पिङ्गलको मोहमुपागतो न किंचिदूचे । दमनकस्तु तस्याकारं दृष्ट्वैवमाह । अयं तावदेकमन्त्रिप्राधान्येन महान्दोष आपतितः । साधु चेदमुच्यते ।

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति ॥ ६५ ॥

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदालस्येन निर्विद्यते ।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणानभिद्रुह्यति ॥ ६६ ॥

विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ ६७ ॥

स चाधुना निरवग्रहः सर्वकार्येषु स्वेच्छया प्रवर्तते । तत्किमयुक्तम् । अपि च

कार्याण्यर्थोपमर्देन स्वनुरक्तोऽपि साधयन् ।
नोपेक्ष्यः सचिवो राज्ञा स तं मन्नात्युपेक्षितः ॥ ६८ ॥

तच्च श्रुत्वा सिंहोऽब्रवीत् । अयं तावदसदृशो मम भृत्यः कथं ममोपरि विकरिष्यति । सोऽब्रवीत् । देव भृत्योऽभृत्य इत्यनैकान्तिकमेतत् । उक्तं च

न सोऽस्ति पुरुषो राज्ञां यो न कामयते श्रियम् ।
अशक्ता भग्नमानास्तु नरेन्द्रं पर्युपासते ॥ ६९ ॥

सिंह आह । भद्र तथापि तस्योपरि मम चित्तं न प्रदुष्यति यत्कारणम् ।

अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः ।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ॥ ७० ॥

दमनक आह । अत एवायं दोषः । व्युदस्य सर्वं मृगजनं स्वामिना यस्योपर्यास्था प्रतिवद्धा सोऽयमधुना स्वामित्वमभिवाञ्छति । अपि च

यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः ।
सुते वा स्वकुलीने वा स लक्ष्म्या ह्रते मनः ॥ ७१ ॥

यच्च महाकायोऽयमिति त्वमुपकाराय चिन्तयसि तदपि विपरीतमेव । यतः

किं गजेन प्रभिन्नेन गजकर्माण्यकुर्वता ।
स्थले वा यदि वा निम्ने श्रेयान्कृत्यकरश्च यः ॥ ७२ ॥

तेन हि देव नायमुपायः ।

सतां मतिमतिक्रम्य योऽसतां वर्तते मते ।
न स जीवयितुं शक्यः सर्वभक्ष इवातुरः ॥ ७३ ॥

यो न निःश्रेयसे ज्ञाने सुहृदां वर्तते वशे ।
अचिरात्स च्युतः स्थानाद्द्विषतां वर्तते वशे ॥ ७४ ॥

अप्रियस्यापि वचसः परिणामाविरोधिनः ।
वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥ ७५ ॥

मूलभृत्योपरोधेन नागन्तून् प्रतिमानयेत् ।
नातः परतरोऽन्योऽस्ति राज्यभेदकरो गदः ॥ ७६ ॥

सिंह आह ।

उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
न तस्य वाच्यं नैर्गुण्यं प्रतिज्ञां परिरक्षता ॥ ७७ ॥

अन्यच्च मयायं शरणागत इति कृत्वाभयवाचं दत्त्वानीतो वर्धितश्च । तत्कथमयमकृतज्ञो द्रुह्यति । दमनक आह ।

दुर्जनः प्रकृतिं याति सेव्यमानोऽपि यत्नतः ।
स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम् ॥ ७८ ॥

अपि च

अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ।
एष एव सतां धर्मो विपरीतो मतोऽन्यथा ॥ ७९ ॥

अन्यच्च । येनैतदभिहितम् ।

स्वजनोऽथ सुहृन्नृपो गुरुर्वा
पुरुषेणोत्पथगो निवारणीयः ।
विनिवर्तयितुं स चेदशक्यः
परतस्तस्य मनोऽनुगं विधेयम् ॥ ८० ॥

स तावद्द्रोही । किं तु

हितकृद्भिरकार्यमीहमानाः
सुहृदः क्लेशपरिग्रहान्निवार्याः ।
परिपूर्णमिदं हि साधुवृत्तं
कथितं सद्भिरसाधुवृत्तमन्यत् ॥ ८१ ॥

स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं
सा स्त्री यानुविधायिनी स मतिमान्यः सद्भिरभ्यर्च्यते ।
सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया नोह्यते
तन्मित्रं यदयन्त्रणं स पुरुषो यः खिद्यते नेन्द्रियैः ॥ ८२ ॥

सुप्तं वह्नौ शिरः कृत्वा भुजंगप्रस्तरे वरम् ।
अप्युपेक्षेत सन्मित्रं न पुनर्व्यसनोन्मुखम् ॥

तद्यदिदं संजीवकसंसर्गव्यसनं तद्देवपादानां त्रिवर्गहाकरम् । बहुप्रकारं विज्ञप्यमाना अपि देवपादा मद्वचनमाक्षिप्य कामतः प्रवर्तते । त्तत्रापचारे भृत्यदोषो न कार्य इति । उक्तं च

नृपः कामासक्तो गणयति न कार्यं न च हितं
यथेष्टं स्वच्छन्दः प्रविचरति मत्तो गज इव ।
ततो मानाध्मातः पतति स यदा शोकगहने
तदा भृत्ये दोषान् क्षिपति न निजं वेत्त्यविनयम् ॥ ८४ ॥

सिंह आह । भद्र । एवमवस्थिते किमसौ प्रत्यादेश्यः । दमनक आह । प्रत्यादिश्यते । कतर एष नयः ।

प्रत्यादिष्टस्त्वरते रिपुरपकर्तुं बलात् प्रहर्तुं वा ।
तस्मात् प्रत्यादेष्टुं न्याय्योऽरिः कर्मणा न गिरा ॥ ८५ ॥

सिंह आह । स तावच्छष्पभुग् वयं पिशितभुजस्तत्किमसौ मम समर्थः । दमनक आह । एवमेतत् । स शष्पभुग् देवपादाः पिशितभु

सोऽन्नभूतो देवपादा भोक्तृभूताः। तथाप्यसौ यदि स्वयमनर्थं न करिष्यति ततोऽन्यस्मादुत्पादयिष्यति। सिंह आह। का शक्तिरस्य स्वतोऽपकर्तुं परतोऽपकर्तुं वा। सोऽब्रवीत्। त्वं तावदजस्रमनेकमत्तगजगवयमहिषवराहशार्दूलचित्रकयुद्धेषु नखदन्तसंनिपातकृतव्रणशबलतनुः। अयं पुनः सदा त्वत्समीपवासी प्रकीर्णविण्मूत्रः। तदनुषङ्गाच्च कृमयः संभविष्यन्ति। ते युष्मच्छरीरसामीप्यात् क्षतविवरानुसारिणोऽन्तः प्रवेक्ष्यन्ति। तथापि त्वं विनष्ट एव। उक्तं च

न ह्यविज्ञातशीलाय कश्चिद्दद्यात् प्रतिश्रयम्।
टिण्टिभस्य हि दोषेण हता मन्दविसर्पिणी ॥ ८६ ॥

पिङ्गलक आह। कथमेतत्। सोऽब्रवीत्।

## अथ यूकामत्कुणकथा नाम सप्तमी कथा।

अस्ति कस्यचिद्राज्ञो वासगृहे सर्वगुणोपेतमनन्यसदृशं शयनम्। तत्र प्रच्छदपटैकदेशे मन्दविसर्पिणी नाम यूका प्रतिवसति स्म। सा च तस्य महीपते रक्तमास्वादयन्ती सुखेन चिरं कालं नयमाना तिष्ठति। अथ कदाचित्तस्मिञ्छयने टिण्टिभो नाम मत्कुणो वायुना प्रेरितः संनिपतितः। स तु तच्छयनमतिसूक्ष्मोत्तरच्छदमुभयोपधानं जाह्नवीपुलिनविपुलं परममृदु सुरभिगन्धं दृष्ट्वा परं परितोषमुपगतः। तत्स्पर्शाकृष्टमना इतश्चेतश्च परिभ्रमन् कथमपि तया मन्दविसर्पिण्या दृष्टः। तया चाभिहितः। कुतस्त्वमस्मिन्नयोग्याधिवास आगतः। अपगम्यतामस्मादिति। सोऽब्रवीत्। आर्ये मया तावदनेकप्रकाराणि ब्राह्मणक्षत्रियविट्शूद्रान्तःस्थानि रुधिराण्यास्वादितानि। तानि तु रूक्षाणि पिच्छिलान्यतुष्टिकराण्यमनोज्ञानि। यः पुनरस्य शयनस्याधिष्ठाता तस्यासंशयं मनोरममममृतोपमं चासृग्भविष्यति। अजस्रं भिषग्भिः प्रयत्नादौषधाद्युपक्रमान्नातपित्तश्लेष्मनिरोधादनामयतया स्निग्धपेशलद्रव्यैः सखण्डगुडदाडिमत्रिकटुकपटुभिः स्थलजजलजखेचरबलवत्प्रधानपिशितोपबृंहितैराहारैरुपाचितं रुधिरं रसायनमिव मन्ये। तच्च सुरभि पुष्टिकरं चेच्छाम्यहं त्वत्प्रसादादास्वादयितुमिति। अतोऽसौ मन्दविसर्पिण्याह। असंभाव्यमेतत् त्वद्विधानामग्निमुखानां दंशवृत्तीनाम्। अतोऽपगम्यतामस्माच्छयनादिति। ततः सोऽस्याः पादयोर्निपत्य पुनस्तदेव प्रार्थितवान्। सा तु दाक्षिण्यात् मान्यथा नामेति प्रतिपन्ना। किं तु नैवाकाले न चातिमृदुभागे त्वयास्य प्रहर्त-

व्यमिति । सोऽब्रवीत् । कोऽस्य कालोऽनभिज्ञोऽहमपरिचितत्वात् । सा त कथयत् । मधुपानश्रमागतनिद्रस्य रतिविलासनिर्भरसुप्तस्य च शनैर्मृदुत भवता विचारणीयम् । मदश्रमनिद्रापरीतकाले नाशु प्रबुध्यत इति । तथैव तेन प्रतिपन्नम् । एवं वर्तमाने प्रथमप्रदोष एव तेन कालानभिज्ञेन बुभुक्ष चर्तेन सुप्तमात्र एव पृष्ठप्रदेशे दृष्टो राजा । असावपि पार्थिव उल्मुकः इव ससंभ्रममुत्थायाह । अरे दृष्टोऽस्मि केनापि निरूप्यतामिति । अ मत्कुणश्चकितत्वाद्राजवचनं श्रुत्वा शयनादवतीर्यान्यद्विवरं प्रविष्टः । शय पालैरपि स्वाम्यादेशाद्दीपिकामादाय सुनिपुणमन्विषद्भिर्वस्त्रं संपरिवर्तय रन्तर्लीना मन्दविसर्पिणी दृष्टा व्यापादिता च ।

इति सप्तमी कथा समाप्ता ।

अतोऽहं ब्रवीमि । न ह्यविज्ञातशीलायेति । आख्याते चास्मि पिङ्गलक आह । भद्र कथमसौ ज्ञातव्यो मया द्रोहबुद्धिरिति कश्चास्य यु मार्ग इति । दमनकोऽब्रवीत् । अन्यदासौ त्रस्ताङ्गो देवपादान्तिकमागच्छ अद्य यदि शृङ्गाग्रप्रहरणाभिमुखो युद्धचित्तः सचकितो दिशोऽवलोकयन् पश्चिम्येत् तदेवपादैरवगन्तव्यं दुष्टबुद्धिरयमिति । एवमुक्त्वा सिंहं वि हृदयं विधाय दमनकः संजीवकसकाशं प्रायात् । तस्यापि मन्दगतिरप्र परीतमिवात्मानमदर्शयत् । ततस्तेन सादरमभिहितः । भद्र भवतः कुश मिति । दमनकोऽब्रवीत् । कुतः खलु कुशलमनुजीविनाम् । कस्मात्

संपत्तयः परायत्ताः सदा चित्तमनिर्वृतम् ।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसंश्रिताः ॥ ८७ ॥

सुष्ठु चेदमुच्यते ।

आचार्या नरपतयश्च तुल्यशीला
न ह्येषां परिचितिरस्ति सौहृदं वा ।
शुश्रूषां चिरमपि संचितां प्रयत्नात्
संक्रुद्धा रज इव नाशयन्ति मेघाः ॥ ८८ ॥

अपि च

कोऽर्थान् प्राप्य न गर्वितो भुवि नरः कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रिय

क: कालस्य न गोचरान्तरगत: कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरानिपतित: क्षेमेण यात: पुमान् ॥ ८९ ॥

तत्सर्वथा

क: काल: कानि मित्राणि को देश: कौ व्ययागमौ ।
कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहु: ॥ ९० ॥

हृदयान्तर्निहितभावस्य तस्य वचनं श्रुत्वा संजीवकोऽब्रवीत्। भद्र। अथ किमत्र। स आह। यद्यपि राजविश्वासो न कथनीयस्तथापि भवांस्तावन्मत्संप्रत्ययादागत: स्थितश्च। तदवश्यं मया तव हितमाख्येयम्। अयं स्वामी पिङ्गलकस्तवोपरि दुग्धबुद्धि:। अनेन चाद्याभिहितम्। संजीवकं हत्वा स्वपरिवारं तदामिषेण तर्पयामीति। एतच्छ्रुत्वा संजीवक: परं विषादमगमत्। दमनक आह। यदत्र करणीयं तदहीनकालं संचिन्त्यतामिति। पूर्वकालं श्रद्धेयवचनत्वाच्च दमनकस्य सुतरामाविग्नहृदय: परं भयमुपागत: संजीवक आह। सुष्ठु खल्विदमुच्यते।

दुर्जनगम्या नार्य: प्रायेणापात्रभृद्भवति राजा।
कृपणानुसारि च धनं देवो गिर्युदधिवर्षी च ॥ ९१ ॥

एवं चाचिन्तयत्। कष्टं भो:। किमिदमापतितं ममेति। अपि च

आराध्यमानो नृपति: प्रयत्ना-
दाराध्यते नाम किमत्र चित्रम्।
अयं त्वपूर्व: प्रतिमाविशेषो
य: सेव्यमानो रिपुतामुपैति ॥ ९२ ॥

तत्सर्वथाशक्योऽयमर्थ:।

निमित्तमुद्दिश्य हि य: प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति।
अकारणद्वेषि मनो हि यस्य वै
कथं परस्तं परितोषयिष्यति ॥ ९३ ॥

साधु चेदमुच्यते।

सरसि बहुशस्ताराछायां दशन् परिवञ्चित:
कुमुदविटपान्वेषी हंसो निशास्वविचक्षण:।
न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं

कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥ ९४ ॥

अथवा

व्यलीकमपरंपरेण न हि नाम नोत्पाद्यते
न चापि न भवन्त्यकारणवशेन रोषोद्गमाः ।
न तु प्रतिविशिष्टबुद्धिरसमीक्ष्य तत्त्वार्थत-
श्चिरानुगतसर्वभावहृदयो जनस्त्यज्यते ॥ ९५ ॥

अपि च

वैद्यविद्वज्जनामात्या यस्य राज्ञः प्रियंवदाः ।
आरोग्यधर्मकोशेभ्यः क्षिप्रं स परिहीयते ॥ ९६ ॥

आह च । किं मयापकृतं स्वामिनः पिङ्गलकस्य । दमनक आह । व निर्निमित्तापकारा हि परन्ध्रान्वेषिणश्च राजानो भवन्ति । सोऽब्रवी एवमेतत् । साधु चेदमुच्यते ।

भक्तानामुपकारिणां प्रियहितव्यापारयुक्तात्मनां
सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि ।
व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादम्बुपतेरिवावनिपतेः सेवा सदाशङ्किनी ॥ ९७ ॥

स्वभावश्चायम् ।

भावस्निग्धैरुपकृतमपि द्वेष्यतामेति किंचि-
च्छाठ्यादन्यैरपकृतमपि प्रीतिमेवोपयाति ।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ९८ ॥
गुणा गुणज्ञेषु गुणीभवन्ति
ते निर्गुणं प्राप्य भवन्ति दोषाः ।
सुस्वादुतोयप्रवहा हि नद्यः
समुद्रमासाद्य भवन्त्यपेयाः ॥ ९९ ॥
स्वल्पेऽपि गुणाः स्फीतिभवन्ति गुणसमुदितेषु पुरुषेषु ।
शशिनः श्वेतस्य गिरेः शिखरप्राप्ता इव मयूखाः ॥ १०० ॥

नश्यन्ति गुणशतान्यपि पुरुषाणामगुणवत्सु पुरुषेषु ।
अञ्जनगिरिशिखरेष्विव निशासु चन्द्रांशवः पतिताः ॥ १०१ ॥
कृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमवुधेषु ।
वचनशतमवचनकरे बुद्धिशतमचेतने नष्टम् ॥ १०२ ॥
नष्टमपात्रे दानं नष्टं हितमहितबुद्धिविज्ञाने ।
नष्टं कृतमकृतज्ञे नष्टं दाक्षिण्यमगुणज्ञे ॥ १०३ ॥
अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं बधिरकर्णजापः कृतः ।
श्वपुच्छमवनामितं सुचिरमूषरे वर्षितं
कृतान्धमुखमण्डना यदबुधो जनः सेवितः ॥ १०४ ॥
चन्दनतरुषु भुजंगा जलेषु कमलानि तत्र च ग्राहाः ।
गुणघातिनः खलु खला भोगेषु क नु सुखान्यविघ्नानि ॥१०५॥
केतक्यः कण्टकैर्व्याप्ता नलिन्यः पङ्कसंभवाः ।
विलासिन्यः सकुट्टिन्यः क रत्नमनुपद्रवम् ॥ १०६ ॥

दमनक आह । अयं तावत् स्वामी पिङ्गलक आदौ वाङ्मधुरः परिणामे विषप्रतिमचित्तो मया ज्ञात इति । विचिन्त्य संजीवकोऽब्रवीत् । भद्र । एवमेवैतत् । मयैवैतदस्मादनुभूतम् । यथा

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो
गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तोत्तरः ।
अन्तर्गूढविषो बहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ १०७ ॥
आदावप्युपचारचाटुविनयालंकारशोभान्वितं
मध्ये चापि विचित्रवाक्यकुसुमैरभ्यर्चितं निष्फलैः ।
पैशुन्याविनयावमानमलिनं बीभत्समन्ते च यद्
दूरे वोऽस्त्वकुलीनसंगतमसद्धर्मार्थिमुत्पादितम् ॥ १०८ ॥

कष्टं भोः । काहं शष्पभक्षः कायमामिषभक्षसिंहसंसर्गः । साधु चेदमुच्यते ।

हुताशज्वालाभे स्थितवति रवावस्तशिखरे
पिपासुः किञ्जल्कं प्रविशति सरोजं मधुकरः ।

तदन्तः संरोधं न गणयति संध्यासमयजं
जनोऽर्थी नापायं विमृशति फलैकान्ततृषितः ॥ १०९ ॥
कमलमधुनस्त्यक्त्वा पानं विहाय नवोत्पलं
प्रकृतिसुभगां गन्धोद्दामामपास्य च मालतीम् ।
शठमधुकराः क्लिश्यन्तीमे कटाम्बुषु दन्तिनां
सुलभमपहायैवं लोकः कटेषु हि रज्यते ॥ ११० ॥
गण्डोपान्तेष्वचिरनिसृतं वारि मत्तद्विपानां
ये सेवन्ते नवमधुरसास्वादलुब्धा द्विरेफाः ।
ते तत्कर्णव्यजनपवनप्रेङ्खितैर्भिन्नदेहा
भूमिं प्राप्ताः कमलविवरक्रीडितानि स्मरन्ति ॥ १११ ॥

अथवा गुणवतामेवायं दोषः । यतः

स्वफलनिचयः शाखाभङ्गं करोति वनस्पते-
र्गमनमलसं बर्हाटोपः करोति शिखण्डिनः ।
चतुरगमनो यो जात्योऽश्वः स गौरिव वाह्यते
गुणवति जने प्रायेणैते गुणाः खलु वैरिणः ॥ ११२ ॥
नरेन्द्रा भूयिष्ठं गुणवति जनेऽत्यन्तविमुखाः
स्त्रियः प्रायो लोभाद्व्यसनिषु च मूर्खेष्वभिरताः ।
नराणां माहात्म्यं गुणत इति मिथ्या स्तुतिरियं
जनः प्रायेणायं न हि पुरुषतत्त्वं गणयति ॥ ११३ ॥
सिंहैः पञ्जरयन्त्रणापरिभवप्रम्लानदीनाननै-
र्नागैरङ्कुशभिन्नमस्तकतटैर्मन्त्रालसैः पन्नगैः ।
विद्वद्भिश्च निराश्रयव्यसनिभिः शूरैश्च भाग्यक्षतैः
कालः क्रीडनकैरिवात्मरुचितैः प्रेङ्खोलयन् क्रीडति ॥ ११४

तत्सर्वथा क्षुद्रमण्डलान्तरप्रविष्टस्य मे जीवितमेव नास्ति । उक्तं च

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः ।
कुर्युर्दोषमदोषं वा उष्ट्रे काकादयो यथा ॥ ११५ ॥

दमनक आह । कथं चैतत् । सोऽब्रवीत् ।

## अथ सिंहानुचरोष्ट्रकथा नामाष्टमी कथा

अस्ति कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म

तस्यानुचरास्त्रयो द्वीपिवायसगोमायवः । अथ तैस्तद्वनं भ्रमद्भिः सार्थवाहपरिभ्रष्ट उष्ट्रो दृष्टः । तं चाविज्ञातपूर्वरूपं हास्यजननं दृष्ट्वा सिंहः पृष्टवान् । इदमपूर्वं सत्त्वमिह वने पृच्छ्यताम् । कस्त्वं कुत आगत इति । ततोऽवगततत्त्वार्थो वायसोऽब्रवीत् । कथनकनामोष्ट्रोऽयमिति । ततस्तैर्विश्वास्य सिंहसकाशमानीतः । तेनापि यथावृत्तमात्मनो वियोगः सार्थवाहात्समाख्यातः । सिंहेन चास्याभ्युपपत्तिरभयप्रदानं च दत्तम् । एवं च वर्तमाने कदाचित् सिंहो वन्यगजयुद्धरदनक्षतशरीरो गुहावासी संवृत्तः । पञ्चषट्सप्तदिवसातिक्रान्ते च काले सर्व एव त आहारवैकल्यादात्ययिकमापतिताः । यतोऽवसन्नास्ततः सिंहेनाभिहिताः । अहमनया क्षतरुजा न क्षमः पूर्ववदाहारं भवतामुत्पादयितुम् । तद्यूयमात्मार्थेऽपि तावदभ्युद्यमं कुरुध्वमिति । ततस्ते प्रोचुः । एवं स्थितेषु देवपादेषु किमस्माकं पुष्ट्यर्थेन । इति । सिंह आह । साध्वनुजीविवृत्तं मदुपरि भक्तिश्च भवताम् । अतिशोभनमभिहितम् । शक्ता भवन्तः सरुजश्चाहम् । तन्ममैतदवस्थस्योपनयताहारमिति । यदा च न किंचिदूचुस्ते तदानेनाभिहिताः । किमनया व्रीडया । अन्विष्यतां किंचित्सत्त्वम् । अहमेतदवस्थोऽपि युष्माकमात्मनश्चोत्पादयिष्ये प्राणयात्रार्थमिति । एवमुक्तास्तेऽप्युत्थाय वनान्तरं प्रविष्टा भ्रमितुमारब्धा यावन्न किंचित्सत्त्वं पश्यन्ति तावद्व्युदस्य कथनकं दुष्टमन्त्रमारब्धाः कर्तुम् । तत्र वायस आह । विनाशिता वयमनेन स्वामिना स्वाधीनेऽप्यर्थे । तावाहतुः । कथम् । सोऽब्रवीत् । इमं कथनकमेव हत्वा किं न प्राणयात्रां कुर्म इति । तावाहतुः । अयमस्माकं विश्वासोपगतः शरणागतो वयस्यत्वेऽनुज्ञातः । स आह । शष्पभुजः पिशिताशिनश्च विषमसंबन्धाः । ततस्तावूचतुः । स्वामिनाप्यस्याभयप्रदानं दत्तम् । तेन चायुक्तमशक्यं चैतदिति । पुनरपि वायसोऽब्रवीत् । तिष्ठत यूयं यावदहमेवैतदर्थं संप्रतिपादयिष्यामि । इत्युक्त्वा सिंहसकाशमगमत् । सिंहेन चाभिहितम् । अन्विष्टं युष्माभिः किंचित् सत्त्वमिति । काकोऽब्रवीत् । यस्य चक्षुर्बलं वा स्यात्सोऽन्विष्यतु । वयं तु सर्व एवाहारवैकल्यादन्धाः परिक्षीणशक्तयश्च । किं तु प्राप्तकालमवश्यं विज्ञाप्यः स्वामी । विनाशितः स्वात्मनात्मा स्वाधीनेऽप्याहारे । सिंहोऽब्रवीत् । कथम् । काक आह । नन्वयं कथनक इति । सिंहः सकोपमाह । कष्टम् । नृशंसमेतत् । मयास्याभ्युपपत्तिरभयं च दत्तम् । तत्कथं व्यापादयामि । अपि च

न गोप्रदानं न महीप्रदानं
न चान्नदानं हि तथा प्रधानम् ।
यथा वदन्तीह महाप्रदानं
सर्वप्रदानेष्वभयप्रदानम् ॥ ११६ ॥

काकोऽब्रवीत् । अहो स्वामिनो धर्मशास्त्रं प्रति प्रतिभा । एतदन्यत् प्रधानं महर्षिवचनं यथा श्रेयसामर्थे पापीयान् समारम्भः । अपि चोक्तम्

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत् ॥ ११७ ॥

पुनश्चाह । मा स्वामी स्वयं व्यापादयतु । मयास्योपाधिना वध आरब्धः सोऽब्रवीत् । कथमिव । वायस आह । अयं तावदेतदवस्थं स्वामिनमस्मा दृष्ट्वा स्वयमेवात्मानमन्यपुष्ट्यर्थं स्वर्गगमनाय सत्त्वहिताय निवेदयति । त न दोषः । एवमभिहितवति वायसे सिंहो मतिभ्रममिवार्पितो न किंचि प्युदाहृतवान् । असावपि पुनस्तत्सकाशं गत्वा कृतकवचनैः प्रत्येकं वि पितवान् । अहो स्वामिनो महत्यवस्था वर्तते । नासिकान्तप्राप्तजीविता ष्ठति । तत्तेन विना कोऽस्माकमत्र कानने रक्षिता । तदस्य क्षुद्रोगात् लोकप्रस्थितस्य स्वयं गत्वा स्वशरीरदानं कुर्मो येन स्वामिप्रसादस्यानृ गच्छामः । इति । ततः कृतसंविदः सह कथनकेन सिंहसकाशं गता अथ काकेनोक्तम् । देव । आहारो न प्राप्तः । अनेकोपवासक्लिष्टश्च स्वामी तत्सर्वथा मदीयं मांसमुपभुज्यतामिति । अथासावाह । स्वल्पकायो भवा न युष्मच्छरीरोपभोगे कृतेऽप्यस्माकं किंचित्तृप्तिकारणं भवति । त श्रापयाते गोमायुरप्येवमभिहितवान् । अस्मान् मम विशिष्टतरं शरीर तन्मत्प्राणैः क्रियतां प्राणयात्रेति । तमपि सिंहस्तथैवाभिहितवान् । अप च तस्मिन् द्वीप्याह । आभ्यां मम विशिष्टतरं शरीरमिदमुपभुज्यतामि तमप्यसावाह । अल्पकायो भवानपीति । तच्छ्रुत्वा कथनकोऽचिन्त नैवात्र कश्चिद्विनाश्यते । तदहमप्येवमेव ब्रवीमि । तत उत्थाय सिंहा कमुपगम्याब्रवीत् । देव । एभ्यो मम विशिष्टतरं शरीरम् । तस्मान्म रीरेणात्मनः प्राणयात्रा क्रियतामिति । एवमभिवदन्नेवासौ द्वीपिगोमायु विदारितोभयकुक्षिः सद्यः पञ्चत्वमुपगतो भक्षितश्चेति ।

इत्यष्टमी कथा समाप्ता ।

अतोऽहं ब्रवीमि । बहवः पण्डिताः क्षुद्रा इति । आख्याते चाख्यानके पुनर्दमनकं संजीवकोऽब्रवीत् । भद्र क्षुद्रपरिवारोऽयं राजा न शिवायाश्रितानाम् । उक्तं च

वरं गृध्रो हंसैः सलिलपरितुष्टैः परिवृतो
न हंसः क्रव्यादैः पितृवनविहंगैरकरुणैः ।
परीवारः क्षुद्रो दहति पुरुषं सद्गुणमपि
सहायैरक्षुद्रैर्भवति गुणहीनोऽपि गुणवान् ॥ ११८ ॥

तत्सोऽयं केनापि ममोपरि राजा विप्रकृतः । साधु चेदमुच्यते ।

मृदुना सलिलेन खन्यमाना-
न्यपकृष्यन्ति गिरेरपि स्थलानि ।
उपजापकृतोद्यमैस्तु तज्ज्ञैः
किमु चेतांसि मृदूनि मानवानाम् ॥ ११९ ॥

तदेवं गते किमधुना प्राप्तकालम् । अथवा किमन्यद्युद्धात् । तदाज्ञानुवर्तनमयुक्तम् । उक्तं च

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम् ॥ १२० ॥

यान् यज्ञसङ्घैस्तपसा च लोकान्
स्वर्गैषिणो दानचयैश्च यान्ति ।
क्षणेन तानप्यभियान्ति धीराः
प्राणान् सुयुद्धेषु परित्यजन्तः ॥ १२१ ॥

प्राणाश्च कीर्तिश्च परिच्छदश्च
सर्वेऽपि युद्धेन हि रक्षणीयाः ।
युद्धे विशिष्टं मरणं नराणां
द्विषद्वशे जीवति यो मृतोऽसौ ॥ १२२ ॥

मृतः प्राप्स्यति वा स्वर्गं शत्रून् हत्वापि वा सुखम् ।
उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ १२३ ॥

दमनक आह । भद्र । अनुपाय एषः । यत्कारणम् ।

शत्रोर्विक्रममज्ञात्वा वैरमारभते हि यः ।
स पराभवमाप्नोति समुद्र इव टिट्टिभात् ॥ १२४ ॥

५

संजीवक आह । कथं चैतत् । दमनकोऽब्रवीत् ।

## अथ टिट्टिभसमुद्रकथा नाम नवमी कथा ।

अस्ति कस्मिंश्चित् समुद्रतीरैकदेशे टिट्टिभदम्पती प्रतिवसतः स्म । अथ कदाचिट्टिट्टिभी प्रत्यासन्नप्रसवा भर्तारमब्रवीत् । नाथ किंचित्प्रसवयोग्यं स्थानमन्विष्यताम् । असावकथयत् । नन्वेतदेव स्थानं वृद्धिकरमत्रैव प्रसूष्वेति । साब्रवीत् । अलमनेन सापायेन स्थानेन । कदाचित् समुद्रवेला जलप्लावनेन ममापत्यान्यपहरेत् । असावाह । भद्रे न शक्तो महोदधिर्मया सार्धमीदृशं वैरानुबन्धं कर्तुमिति । सा विहस्याब्रवीत् । बह्वसदृशं तव समुद्रेण बलम् । कथमात्मनो न ज्ञायते सारासारता । उक्तं च

दुःखमात्मा परिच्छेत्तुमेवं योग्यो न वेति वा ।
अस्तीदृग् यस्य विज्ञानं स कृच्छ्रेऽपि न सीदति ॥ १२५ ॥

अपि च

मित्राणां हितकामानां यो वाक्यं नाभिनन्दति ।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥ १२६ ॥

टिट्टिभ आह । कथं चैतत् । साब्रवीत् ।

## अथ हंसकच्छपकथा नाम दशमी कथा ।

अस्ति कस्मिंश्चित् सरसि कम्बुग्रीवो नाम कच्छपः प्रतिवसति स्म । तस्य द्वौ सुहृदौ सङ्कटविकटनामानौ हंसौ । अथ कालविपर्यये द्वादशवार्षिक्यनावृष्टिरापतिता । ततस्तयोर्मतिरुत्पन्ना । क्षीणतोयं जातमिदं सरः । अन्यं जलाशयं गच्छाव इति । किं पुनश्चिरपरिचितमिदं प्रियमित्रं कम्बुग्रीवमामन्त्रयावहे । तथा चानुष्ठिते कच्छपेनाभिहितौ । कस्मान् ममामन्त्रणं क्रियते । यदि तु स्नेहोऽस्ति ततो मामप्यस्मान् मृत्युमुखात् त्रातुमर्हथः । यत्कारणं युवयोस्तावदाहारवैकल्यमेव केवलमस्मिन् स्वल्पोदके सरसि ममात्र तु मरणमेव । तद्विचिन्त्यतामाहारप्राणवियोगयोः को गरीयान् । ताभ्यामभिहितम् । युक्तमात्थ । एवमेतत् । किं पुनः प्राप्तकालं भवान् जानाति । अवश्यं नयाव आवां भवन्तम् । त्वया पुनः पथि चापलान्न किंचिद्वक्तव्यम् । तथेत्युक्ते कच्छपेन हंसौ यष्टिमानीयाहतुः । इमां तु यष्टिं मध्ये दशनैरापीडय । आवामप्यन्तयोर्गृहीत्वा व्योममार्गेण दूरं महत् सरो भव

नयावः । एवं च निष्पन्ने तज्जलाशयसंनिकृष्टनगरस्योपरिष्टात् नीयमानं कच्छपं दृष्ट्वा किमिदं शकटचक्रप्रमाणं पक्षिभ्यां वियता नीयत इति जनः सकलकलः संवृत्तः । तच्च श्रुत्वासन्नविनाशः कच्छपो यष्टिं त्यक्त्वाभिहितवान् । कोऽयं कलकलः । इति ब्रुवन् वचनसमकालमेव काष्ठात् परिभ्रष्टो भूमौ निपतितः । मांसार्थिना च लोकेन पातसमकालमेव तीक्ष्णशस्त्रैः खण्डशो विभक्त इति ।

इति दशमी कथा समाप्ता ।

अतोऽहं ब्रवीमि । मित्राणां हितकामानामिति । पुनश्चाह ।

अनागतविधाता च प्रत्युत्पन्नमतिश्च यः ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥ १२७ ॥

टिट्टिभ आह । कथं चैतत् । साब्रवीत् ।

## अथानागतविधातृप्रत्युत्पन्नमतियद्भविष्यकथा नामैकादशी कथा

अस्ति कस्मिंश्चिन्महाह्रदे महाकायास्त्रयो मत्स्याः प्रतिवसन्ति स्म । तद्यथा । अनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति । तत्रानागतविधात्रा तदुदकान्तर्गतेन कदाचित्तत्समीपे मत्स्यबन्धानामतिक्रामतां वचनं श्रुतम् । बहुमत्स्योऽयं ह्रदः । तदत्र श्वो मत्स्यबन्धनं कुर्मः । तच्च श्रुत्वानागतविधात्रा चिन्तितम् । अवश्यमेत आगन्तारः । तदहं प्रत्युत्पन्नमतिं यद्भविष्यं च गृहीत्वान्यमच्छिन्नस्रोतस्कं ह्रदं संश्रयामीति । ततो वयस्यावाहूय पृष्टवान् गमनाय । तत्र प्रत्युत्पन्नमतिरब्रवीत् । यद्यत्र मत्स्यजीविनः समागमिष्यन्ति तदाहं तत्समयोचितकर्मणा केनाप्यात्मानं रक्षयिष्यामि । यद्भविष्यस्त्वासन्नविनाशस्तद्वचनमनादृत्य गमनं प्रति निरारम्भ एवासीत् । एवं तौ तत्र स्थिरौ मत्वानागतविधाता नदीस्रोतः प्रविश्यान्यजलाशयं गतः । अन्येद्युश्चापयाते तस्मिन् परिजनसमेतैर्मत्स्यबन्धैरन्तःस्रोतो निरुध्य संवर्तजालं प्रक्षिप्य निःशेषमत्स्यानां बन्धः कृतः । एवं गते प्रत्युत्पन्नमतिर्मृतरूपं कृत्वात्मानं जालस्यान्तर्दर्शितवान् । तैश्च स्वयमेव मृतोऽसौ महामत्स्य इति मत्वा जालादाकृष्य स्रोतःसमीपे स्थापितः । ततस्तु स उत्प्लुत्यान्यं जलाशयं सहसैव गतः । यद्भविष्यस्तु किंकर्तव्यतामूढ इतस्ततो भ्रमञ्जालैर्बद्ध्वा लगुडैर्व्यापादितः ।

इत्येकादशी कथा समाप्ता ।

अतोऽहं ब्रवीमि । अनागतविधाता चेति । टिट्टिभ आह । भद्रे मां यद्भविष्यवन् मन्यसे । तन्न भीः कार्या । मद्भुजपरिरक्षितायाः कस्ते प भवं कर्तुं समर्थः । अथ टिट्टिभी तत्रैव प्रसूता । श्रुतपूर्वतदालापेन समु णापि तत्प्रति जिज्ञासयाण्डान्यपहृतानि । पश्यामि तावदयं किमारभ इति । अथ टिट्टिभी शून्यमपत्यस्थानं दृष्ट्वा शोकार्ता भर्तारमाह । तत्कष्टमापतितं मम मन्दभाग्यायाः यत्पूर्वं मया तत्रोक्तं स्थानाश्रयवैपम्या पत्यनाश इति । टिट्टिभ आह । ममापि तावद्भद्रे दृश्यतां सामर्थ्यमिति ततस्तेन पक्षिसमाजं कृत्वा निवेदितं तदपत्यहरणजं दुःखम् । तत्रैकेन पक्षि णाभिहितम् । असमर्था वयं महोदधिविग्रहस्य । किं पुनरत्र प्राप्तकालम् सर्वे एव वयमाक्रन्देन गरुत्मन्तमुद्वेजयामः । स एव नो दुःखमपनेष्यति इति संप्रधार्य गरुडसकाशं गताः । असावपि देवासुरसङ्ग्रामनिमित्तं सम हूतो भगवता नारायणेन । ततस्तस्मिन्नेव समये तैः पक्षिभिर्निवेदितं समु कृतमपत्यहरणवियोगदुःखं स्वामिने पक्षिराजाय यथा देव त्वयि ना प्रतपति चञ्चुभरणमात्रजीविनो भोजनदौर्बल्यादस्मान् परिभूय समु शिशूनपहृतवान् । गरुडश्च तत्स्वयूथ्यव्यसनं दृष्ट्वा मन्युमाजगाम । देवोऽ नारायणस्त्रैकाल्यदर्शनसामक्ष्यात् तस्यान्तर्गतं मत्वा स्वयमेव तत्सका मगमत् । अथ देवं दृष्ट्वा सुतरामाविग्रहहृदयोऽब्रवीत् । युक्तं त्वया ना सता समुद्रापसदान्ममायं पराभव इति । ज्ञात्वा च देवः परिहस्य समु स्येदमुवाच । समर्पयाधुनाण्डानि टिट्टिभस्येति । अन्यथा त्वामाग्नेयास्त्रप्र पितमनेकवडवामुखसहस्रपरिक्षिणतोयं स्थलतां नयामीति । ततो देवाज्ञ समुद्रेण सभयेन तान्यण्डानि समर्पितानि ।

## इति नवमी कथा समाप्ता

अतोऽहं ब्रवीमि । शत्रोर्विक्रममज्ञात्वेति । अवगतार्थश्च संजीवक मपृच्छत् । वयस्य कथय कस्तस्य युद्धमार्ग इति । सोऽब्रवीत् । अन्यदा स्रस्ताङ्गः शिलातलमाश्रितस्त्वदुन्मुखः प्रतीक्षते । अद्य यदि प्रथमं समुन्नतलाङ्गूलः संयतचतुश्चरणो विवृतास्यः स्तब्धकर्णश्च दूरादेव त्व मुखमीक्षमाणस्तिष्ठति तदा ज्ञात्वायं ममोपरि दुष्टमतिरिति त्वमपि हरिष्यसि । एवमुक्त्वा दमनकः करटकसमीपं गतः । तेन चाभिहित

किमनुष्ठितं भवता । सोऽब्रवीत् । निष्पन्नोऽसावन्योन्यं भेदः । फलेन ज्ञास्यासि । कश्चात्र विस्मयः । उक्तं च ।

भिनत्ति सम्यक् प्रहितो भेदः स्थिरमतीनपि ।
भूधरान् संहतशिलान् महानिव रयोऽम्भसाम् ॥ १२८ ॥

इत्युक्त्वा दमनकः करटकेन सह पिङ्गलकसमीपं गतः । संजीवकोऽप्युद्विग्नमना मन्दं मन्दं गत्वा तदवस्थं यथापूर्वाख्याताकारं सिंहं दृष्ट्वा तत्सकाशमेवोपश्लिष्टश्चिन्तयामास । साध्विदमुच्यते ।

अन्तर्गूढभुजंगमं गृहमिव व्यालाकुलं वा वनं
　ग्राहाकीर्णमिवाभिरामकमलछायासनाथं सरः ।
नित्यं दुष्टजनैरसत्यवचनैः क्षुद्रैरनार्यीकृतं
　दुःखेनेह विगाह्यते सुचकितै राज्ञां मनः सेवकैः ॥ १२९ ॥

इत्यात्मनस्तथैव यत्नमास्थितः । पिङ्गलकोऽपि तथाविधं तं विलोक्य दमनकवाक्यं श्रद्दधानः कोपात्तस्योपरि संनिपतितः । अथ संजीवको नखकुलिशाग्रावलुञ्चितपृष्ठः स्वशृङ्गाग्रप्रहारेण तस्योदरमुल्लिख्य तस्मात् कथमप्युत्थितः । पुनरपि च तयोर्वृद्धामर्षयोः परस्परं महद्युद्धमभवत् । उभावपि च तौ पुष्पितपलाशतुल्यौ दृष्ट्वा साधिक्षेपं करटको दमनकमाह । धिग्दुरात्मन् सर्वमाकुलितं त्वयैतन् मूर्खतया ।

कार्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये
　प्रीत्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः ।
निःसाराल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमै-
　स्तेषां दुर्नयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलाम् ॥ १३० ॥

तन्मूर्ख

साम्नैव हि प्रयोक्तव्यमादौ कार्यं विजानता ।
सामसिद्धा हि विधयो न प्रयान्ति पराभवम् ॥ १३१ ॥
नोन्मयूखेन रत्नेन नातपेन न वह्निना ।
साम्नैव विलयं याति विद्वेषप्रभवं तमः ॥ १३२ ॥
सामादिर्दण्डपर्यन्तो नयो दृष्टश्चतुर्विधः ।
तेषां दण्डस्तु पापीयांस्तस्मात्तं परिवर्जयेत् ॥ १३३ ॥

अपि च

ये सामदानभेदास्ते किल बुद्धेरनावृतं द्वारम् ।
यस्तु चतुर्थ उपायस्तमाहुरार्याः पुरुषकारम् ॥ १३४ ॥

द्विपाशीविषसिंहाग्निजलानिलविवस्वताम् ।
बलं बलवतां दृष्टमुपायाक्रान्तिनिष्फलम् ॥ १३५ ॥

प्रवृत्ता बहवः शूराः प्रांशवः पृथुवक्षसः ।
चक्षुष्मन्तोऽप्यबालाश्च किमित्यनुगता गतम् ॥ १३६ ॥

यदपि च मन्त्रिपुत्रोऽहमित्यवलेपादतिभूमिं गतोऽसि तदप विनाशाय ।

यां लब्ध्वेन्द्रियनिग्रहो न महता भावेन संपद्यते
या बुद्धेर्न विधेयतां प्रकुरुते धर्मे न या वर्तते ।
लोके केवलवाक्यमात्ररचना यां प्राप्य संजायते
या नैवोपशमाय नापि यशसे विद्वत्तया किं तया ॥ १३

शास्त्रे चाभिहितः पञ्चाङ्गो मन्त्रस्तद्यथा । कर्मणामारम्भोपायः पु द्रव्यसंपद् देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति । सो मधुना स्वामिनो महात्ययो वर्तते । तदत्र विनिपातप्रतीकारश्चिन्त्यता अपि च

मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके ।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ १३८ ॥

तन्मूर्ख विपरीतबुद्धिरसि । विद्वन्मानित्वादात्मनोऽनर्थमुत्पाद साधु चेदमुच्यते ।

ज्ञानं मदोपशमनं मन्दानां कुरुते मदम् ।
चक्षुःप्रबोधनं तेज उलूकानामिवान्ध्यकृत् ॥ १३९ ॥

तं च कृच्छ्रावस्थागतं स्वामिनं दृष्ट्वा करटकः परं विषादमग आह च । कष्टमिदमापतितं स्वामिनोऽनयोपदेशात् । अथवा साध्विदमु

नराधिपा नीचमतानुवर्तिनो
बुधोपदिष्टेन पथा न यान्ति ये ।
विशन्ति ते दुर्गममार्गनिर्गमं
समस्तसंबाधमनर्थपञ्जरम् ॥ १४० ॥

तन्मूढ सर्वस्तावत् स्वामिनो गुणवत्परिग्रहं करोति । त्वद्विधेन तु पिशुनवचसा भेदः कृतः स्वामिनो मित्रविश्लेषश्च । कुतः स्वामिनो गुणवत्सहायसंपत् । उक्तं च

गुणवानप्यसन्मन्त्री नृपतिर्नाधिगम्यते ।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ १४१ ॥

त्वं तु प्रायश आत्मविभूत्यर्थं विविक्तमेव राजानं कर्तुमिच्छसि । तन्मूर्ख किं न वेत्सि ।

आकीर्णः शोभते राजा न विविक्तः कदाचन ।
ये तं विविक्तमिच्छन्ति ते तस्य रिपवः स्मृताः ॥ १४२ ॥

त्वं चैतन्नावबुध्यसे । तदसंशयाकृतिविसंवाद एव प्रजापतेः । कस्मात्

परुषे हितमन्वेष्यं तच्चेदस्त्यमृतं हि तत् ।
मधुरे शाठ्यमन्वेष्यं तच्चेदस्ति विषं हि तत् ॥ १४३ ॥

यदपि च परसुखोपभोगेर्ष्यया दुःखितोऽसि तदपि न साधु लब्धस-द्भावेषु मित्रेष्वेवं वर्तितुम् । यतः

शाठ्येन मित्रं कपटेन धर्मं
परोपतापेन समृद्धिभावम् ।
सुखेन विद्यां परुषेण नारीं
वाञ्छन्ति ये नूनमपण्डितास्ते ॥ १४४ ॥

था ।

यैव भृत्यगता संपद्विभूतिः सैव भूपतेः ।
रत्नोद्भासिभिरुद्भूतैः कस्तरङ्गैर्विनोदधिः ॥ १४५ ॥

यश्च स्वामिनो लब्धप्रसादो भवति स नितरां विनीततरः स्यात् । उक्तं च

यथा यथा प्रसादेन भर्ता भृत्यस्य वर्तते ।
तथा तथा सशङ्कस्य गतिर्निम्नैव शोभते ॥ १४६ ॥

घुधर्मोऽसि । उक्तं च

महान् प्रणुन्नो न जहाति धीरतां
न कूलपातैः कलुषो महार्णवः ।

लघोर्विकारस्तनुनापि हेतुना
चलन्ति दर्भाः शिथिलेऽपि मारुते ॥ १४७ ॥

अथवा स्वामिन एवैष दोषो यद्युष्मद्विधैर्मन्त्रमात्रव्यपदेशकेवलो विभिः षाड्गुण्योपायेऽत्यन्तबाह्यैस्त्रिवर्गप्राप्त्यर्थमसमीक्ष्य मन्त्रयते । चेदमुच्यते ।

चित्रस्वादुकथैर्भृत्यैरनायासितकार्मुकैः ।
ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ १४८ ॥

तत्सर्वथा विभावितं त्वयात्मीयमन्वयागतं मन्त्रित्वमनेनानुष्ठा नूनं तव पिताप्येवंलक्षण एवासीत् । कथं पुनरेतज्ज्ञायते । यतः

अवश्यं पितुराचारं पुत्रः समनुवर्तते ।
न हि केतकवृक्षस्य भवत्यामलकीफलम् ॥ १४९ ॥

न च स्वभावगम्भीराणां विदुषां परेणागमरन्ध्रान्तरं लभ्यते ब कालेनापि यदि स्वयमेव चापलादात्मनश्छिद्रं न प्रकाशयेयुः । साधु मुच्यते ।

यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गम् ।
यदि जलदध्वनिमुदितास्त एव मूढा न नृत्येयुः ॥ १५० ॥

तत्सर्वथा किं तवोपदेशेनापसदस्य । उक्तं च

नानाम्यं नाम्यते दारु न शस्त्रं वहतेऽश्मनि ।
सूचीमुखं विजानीहि नाशिष्यायोपदिश्यते ॥ १५१ ॥

दमनक आह । कथं चैतत् । करटक आह ।

## अथ शाखामृगखद्योतपक्षिकथा नाम द्वादशी कथा ।

अस्ति कस्मिंश्चिद्वनोद्देशे वानरयूथम् । तच्च कदाचिद्धेमन्त शीतार्तमतिविह्वलतया खद्योतं वह्निरयमिति मत्वाहार्यैः शुष्कदारुतृण राच्छाद्य प्रसारितभुजं कक्षकुक्षिवक्षःप्रदेशान् कण्डूयमानं तापमनोरथ किलानुभवति स्म । अथ तत्रैकः शाखामृगो विशेषतः शीतार्तस्तद्व मुहुर्मुहुस्तमेव मुखेनोपाधमत् । अथ सूचीमुखो नाम पक्षी तद्दृष्ट्वा वृक्षा तीर्याभिधत्ते । भद्र मा क्लिश्यतां नायं वह्निः खद्योतोऽयमिति । अ तद्वचनमनादृत्य पुनर्धमति । पुनश्च तेनासकृन्निवार्यमाणोऽपि नैव शाम्य

किं बहुना तावत्तेन कर्णाभ्याशमागत्यागत्य प्रबलमुद्वेजितो यावत्तेन कुपितेन सहसा गृहीत्वा शिलायामाविध्य विगतप्राणः कृतोऽसौ ।

इति द्वादशी कथा समाप्ता ।

अतोऽहं ब्रवीमि । नानाम्यं नाम्यते दार्विति । अथवा

किं करिष्यति पाण्डित्यमपात्रे प्रतिपादितम् ।
सपिधाने धृतः कुम्भे प्रदीप इव वेश्मनि ॥ १५२ ॥

तन्नूनमपजातस्त्वम् । उक्तं च

जातः पुत्रोऽनुजातश्च अभिजातस्तथैव च ।
अपजातश्च लोकेऽस्मिन् मन्तव्याः शास्त्रदृष्टिभिः ॥ १५३ ॥
मातृतुल्यगुणो जातस्त्वनुजातः पितुः समः ।
अभिजातोऽधिकस्तस्मादपजातोऽधमाधमः ॥ १५४ ॥

साधु चेदमुच्यते ।

प्रज्ञयातिविसारिण्या यो धनेन बलेन च ।
धुरं वहति गोत्रस्य जननी तेन पुत्रिणी ॥ १५५ ॥

अपि च

आपातमात्रसौन्दर्यं कुत्र नाम न विद्यते ।
अत्यन्तप्रतिपत्त्या तु दुर्लभोऽलंकृतो जनः ॥ १५६ ॥

तन्मूर्ख न किंचिदभिवदसि । उक्तं च

भिन्नस्वरमुखवर्णः शङ्कितदृष्टिः समुत्पतितदेहः ।
भवति हि पापं कृत्वा स्वकर्मसंत्रासितः पुरुषः ॥ १५७ ॥

साधु चेदमुच्यते ।

दुष्टबुद्धिरबुद्धिश्च द्वावेतौ धिङ्मतौ मम ।
तनयेनातिपाण्डित्यात् पिता धूमेन मारितः ॥१५८ ॥

दमनक आह । कथं चैतत् । करटकोऽब्रवीत् ।

## अथ धर्मबुद्धिदुष्टबुद्धिकथा नाम त्रयोदशी कथा ।

अस्ति कस्मिंश्चिन्नगरे वणिक्पुत्रौ प्रियसुहृदौ धर्मबुद्धिदुष्टबुद्धिनामानौ स्तः । तावर्थोपार्जननिमित्तं विप्रकृष्टं देशान्तरं गतौ । अथ तत्र धर्मबुद्धिर्नाम यः सार्थवाहसुतस्तेन कस्यचित्साधोः पूर्वस्थापितं कलशिकागतं

स्वभाग्यप्रचोदितं रौप्यदीनारसहस्रं प्राप्तम् । स तु दुष्टबुद्धिना सह संप्रधार्य कृतार्थावावां तद्गृहीत्वा स्वनगरं गच्छाव इति निश्चित्य प्रत्यागतौ । अधि ष्ठानसमीपे धर्मबुद्धिनाभिहितम् । दीनारा अर्धविभागेन विभज्यन्तां स्वगृ हान् प्रविशावोऽधुना सुहृत्स्वजनादिसमक्षमुज्ज्वलं वत्स्यावः । अथ दुष्ट बुद्धिरन्तःकुटिलहृदयः स्वार्थसिद्धये तमाह । भद्र वित्तशेषो यावदावयो सामान्यस्तावदविच्छिन्नः स्नेहसद्भावः । किं त्वेकमेकं शतं गृहीत्वा शेषमिह भूमौ निक्षिप्य स्वगृहं प्रविशावो भूयोऽपि प्रयोजने संजाते तन्मात्रं समेत्य स्मात् स्थानान्नेष्यावः । तेनोक्तम् । यथाह भवान् । तथा चानुष्ठिते शे वृक्षमूले भूमौ सुगुप्तं कृत्वा स्वगृहं प्रविष्टौ । अथ तद्वर्षाभ्यन्तरे दुष्टबुद्धिर द्व्ययव्यसनित्वाद्भाग्यछिद्रतया च क्षीणप्रत्यंशः पुनरपि च निधितो धर्मबुद्धि ना सहापरं शतं शतं विभक्तवान् । तदपि द्वितीयवर्षाभ्यन्तरे तथैव क्षीणम् एवं गते दुष्टबुद्धिश्चिन्तयामास । यदि पुनस्तेन सह शतं विभजामि त च्छेषैश्चतुर्भिः शतैरपहृतैरपि किमल्पैः । शेषैः षड्भिरपहृतैः समस्तान्येवास्मा यामि । इति निश्चित्यैकाकी भूत्वा तामर्थमालामपनीय तं भूप्रदेशं समीकृ वान् । अतिक्रान्ते च मासमात्रे स्वयं गत्वा धर्मबुद्धिमभिहितवान् । भ अस्ति मे व्ययः । एहि समविभागं शेषस्य वित्तस्य कुर्व इति । प्रतिपन्ने धर्मबुद्धिना सह गत्वा तमेवोद्देशं खातकर्म कर्तुमारब्धः । खन्यमाने भूभागे यदासावर्थो न दृश्यते तदा प्रथमतरं धृष्टतया दुष्टबुद्धिः पाषाणे स्मनः शिरोऽताडयदब्रवीच्च ससंभ्रमम् । भो धर्मबुद्धे त्वयैवाप मेतद्धनं नान्येन । तत् प्रयच्छ मे तस्यार्धम् । स आह । नैतच्चौर्यकर्माच त्वयापहृतमिति । एवं परस्परं विवदमानौ राजकुलमुपागतौ । आवेदि तस्मिन्नर्थेऽवगतेऽव्यक्तव्यवहारदुश्छेदतया धर्माधिकृतैः संनिरुद्धौ । पञ्चा भ्यन्तराच्च दुष्टबुद्धिनाधिकृतानां प्रतिज्ञातम् । साक्षी ममास्त्यत्र व्यवहारे राणाम् । इदानीं पृच्छ्यतामिति । तैस्तु व्यवहारनिर्वर्तनार्थं पृष्टः । कस्ते दर्शयस्वेति । सोऽब्रवीत् । यस्यैव वृक्षस्य मूले स्थापितं द्रव्यं स एव साक्षीति । अथ तैर्धर्माधिकृतैर्विस्मयादभिहितम् । कथं वनस्पतिर्मन्त्रयि भवतु परस्मिन् दिने प्रतिपादयिष्यतीति । कृतप्रतिभुवौ द्वावपि स्वगृहं र्जितौ । अथ दुष्टबुद्धिना स्वगृहं गत्वा पिता याचितः । तात मद्धस्त दीनाराः । किं तु तव वाङ्मात्रावबद्धास्तिष्ठन्ति । पिताह । किमत्र क

स आह । अस्मिन् वृक्षकोटरेऽद्य रात्रौ प्रविश्यादृश्यीभूय स्थीयताम् । प्रातर्धर्माधिकृतैः पृष्टे वक्तव्यम् । धर्मबुद्धिना तद्धनं गृहीतमिति । ततस्तेनाभिहितम् । पुत्र विनष्टावावाम् । यत्कारणम् । अनुपाय एषः । साधु चेदमुच्यते ।

उपायं चिन्तयेत्प्राज्ञो ह्यपायमपि चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलैर्भक्षिताः सुताः ॥ १५९ ॥

सोऽब्रवीत् । कथं चैतत् । पिताह ।

## अथ बकसर्पनकुलकथा नाम चतुर्दशी कथा ।

अस्ति कस्मिंश्चिदर्जुनवृक्षे बकदम्पती प्रतिवसतः स्म । तत्र च तद्वृक्षविवरानुसारी महाकायः सर्पो यावन्ति बकापत्यानि भवन्ति तावन्त्येवासंजातपक्षाणि भक्षयति स्म । तेन च निर्वेदेन नष्टसंज्ञ आहारक्रियामुत्सृज्य सरस्तीरं गत्वा बको विमनस्क आस्ते । अथ तत्रैकः कुलीरकस्तं दृष्ट्वाह । माम किमद्योद्विग्नो भवानिति । स तु तस्मै यथावृत्तमपत्यभक्षणमाख्यातवान् । कुलीरकस्तु तं समर्थितवान् । भद्र अहमुपायं तद्वधाय ते कथयामि । येयं नकुलवसतिरेतत्प्रभृत्यविछिन्नपरंपरया सर्पविवरं यावन् मत्स्यपिशितं प्रकीर्यताम् । ततस्तदाहारलुब्धैर्नकुलैरयमागत्यात्र द्रष्टव्यः स्वभावविद्वेषाद्व्यापादयितव्यश्च । तथा चानुष्ठिते नकुलैर्मत्स्यमांसमार्गानुसारिभिः पूर्ववैरक्रियामनुस्मरद्भिः सर्पं व्यापाद्य पूर्वदृष्टमार्गमाधावद्भिस्तद्वृक्षे बकावासं गत्वा बकापत्यानि भक्षितानि ।

## इति चतुर्दशी कथा समाप्ता ।

अतोऽहं ब्रवीमि । उपायं चिन्तयेत्प्राज्ञ इति । एतच्छ्रुत्वापि लोभाक्रान्तेन दुष्टबुद्धिना बलाद्रात्रौ नीत्वा पिता वृक्षकोटरे स्थापितः । अथ प्रभातसमये धर्माधिकरणप्रकृतिप्रत्यक्षं धर्मशास्त्रवचनाभिश्रावितावनस्पतेर्निःसृता वाक् । धर्मबुद्धिनैतद्धनमपहृतम् । तच्च श्रुत्वा धर्मबुद्धिरचिन्तयत् । कथमेतदसत्यमलौकिकमापतितम् । तदहमिममेव वृक्षमारुह्य निरीक्षयामि । इति निरीक्ष्याहार्यैः शुष्कदारुपर्णनिचयैर्वृक्षविवरमापूर्याग्निमादीपयितुमारब्धः । अथ ज्वलति तस्मिन्नर्धदग्धशरीरः स्फुटितदृष्टिः करुणमाक्रन्दन्दुष्टबुद्धिपिता किंचिच्छेषजीवितो वृक्षकोटरान्निःसृत्य भूमौ निपतितः । ततः सविस्मयं सर्वैर्दृष्टः

पृष्टश्च। भोः किमिदम्। ततोऽसावब्रवीत्। अहमनेन दुष्पुत्रेण दुष्टबुद्धिनावस्थामिमां प्रापित इति। एवमभिवदन् पञ्चत्वमुपगतः। अथ ते राजाधिकृतैस्तमर्थं ज्ञात्वा धर्मबुद्धये तद्धनं दापयित्वा दुष्टबुद्धिः शूले निक्षिप्तः।

इति त्रयोदशी कथा समाप्ता।

अतोऽहं ब्रवीमि। दुष्टबुद्धिरबुद्धिश्चेति। आख्याते चाख्यानके पुनः करटको दमनकमब्रवीत्। धिङ्मूर्खातिपाण्डित्येन त्वया दग्धः स्ववंशः। साधु चेदमुच्यते।

लवणजलान्ता नद्यः स्त्रीभेदान्तानि बन्धुहृदयानि।
पिशुनजनान्तं गुह्यं दुष्पुत्रान्तानि च कुलानि॥ १६०॥

अपि च यस्य तावन् मनुष्यस्यैकस्मिन्नेव मुखे जिह्वाद्वयं भवति कस्तस्य विश्वासमियात्। उक्तं च

द्विजिह्वमुद्वेगकरं क्रूरमेकान्तनिष्ठुरम्।
खलस्याहेश्च वदनमपकाराय केवलम्॥ १६१॥

तन्ममाप्यनेन तव चरितेन भयमुत्पन्नम्। कस्मात्

मा गाः पिशुनविस्रम्भं ममायं पूर्वसंस्तुतः।
चिरकालोपचीर्णोऽपि दशत्येव भुजंगमः॥ १६२॥
विद्वानृजुरभिगम्यो विदुषि शठे चाप्रमादिना भाव्यम्।
ऋजुमूर्खस्त्वनुकम्प्यो मूर्खशठः सर्वथा वर्ज्यः॥ १६३॥

तत्र केवलमात्मीयवंशविनाशस्त्वया प्रयतितः किं पुनरधुना स्वामिनोऽपि व्यभिचरितम्। तद्यतस्त्वं स्वं स्वामिनमिमां दशां नयसि तस्य तवान्ये तृणभूतः। उक्तं च

तुलां लोहसहस्रस्य यत्र खादन्ति मूषकाः।
गजं तत्र हरेच्छ्येनो दारके कोऽत्र विस्मयः॥ १६४॥

दमनकोऽब्रवीत्। कथं चैतत्। सोऽब्रवीत्।

अथ लोहभक्षकमूषककथा नाम पञ्चदशी कथा।

अस्ति कस्मिंश्चिदधिष्ठाने क्षीणविभवो वणिक्पुत्रः। स देशान्तरमर्थोपार्जननिमित्तं प्रस्थितः। तस्य च गृहे पूर्वपुरुषोपार्जिता लोहपलसहस्रघटिता तुलास्ति। स चान्यस्मिन् वणिक्पुत्रके तां निक्षिप्य देशान्तरमर्थोपार्जना-

प्रायात्। स च मन्दभाग्यतया बहुनापि कालेन न किंचित् प्राप्य प्रत्यागतस्तां निक्षिप्तां तुलां तस्मात् प्रार्थितवान्। असावपि लुब्धोऽब्रवीत्। सा तुला मूषकैर्भक्षितेति। अथासावचिन्तयत्। विस्मयनीयमेतत्। कथं लोहसहस्रमयीं तुलां मूषका भक्षयिष्यन्तीति। अन्तर्लीनमवहस्याब्रवीत्। अवश्यमेतदेवम्। यत्कारणम्। वृष्यं स्वादु मृदु च लोहं कथमाखवो न भक्षयिष्यन्ति। इति प्रतिपन्नवाक्। असावपि सुपरितुष्टहृदयः पाद्यादिपुरःसरां तस्य पूजां कर्तुमारब्धवान् भोजनं च प्रार्थितवान्। तस्य च नातिदूरे नदी। तत्र स्नानाभ्युद्यतस्य च तस्य स्वीयं पुत्रमेकमामलकस्नानशाटिकासमेतं पृष्ठतः प्रेषितवान्। असावपि स्नात्वा प्रत्यागच्छंस्तं दारकमन्यस्मिन् मित्रगृहे सुगुप्तं कृत्वा तद्गृहमागतः। पृष्टश्च तेन वणिजा। क्वासौ दारकस्तवानुपदप्रेपितः। इह न प्रविष्ट इति। अथ सोऽब्रवीत्। श्येनेनापहृत इति। तच्छ्रुत्वा परमाविघ्नो निर्दयीभूतश्च तं बाहौ गृहीत्वा धर्मस्थानमुपनीतवान्। आह च। परित्रायध्वं परित्रायध्वमनेन दुरात्मना मे दारकः क्वापि गोपित इति। पृष्टश्चासौ धर्माधिकृतैः। किमेतत्। कथ्यतामिति। स विहस्याब्रवीत्। श्येनेनापहृत इति। ततस्तैर्विस्मितमनोभिरभिहितः। अलौकिकमेतत्। कथं श्येनो दारकमपहरिष्यतीति। स आह। किमत्र चित्रम्।

तुलां लोहसहस्रस्य यत्र खादन्ति मूषकाः।
गजं तत्र हरेच्छ्येनो दारके कोऽत्र विस्मयः॥ १६५॥

तच्छ्रुत्वा तैरधिगतवृत्तान्तैरुक्तम्। समर्पयास्य लोहसहस्रतुलामयमपि दारकमानेष्यतीति। ततस्तौ तथानुष्ठितवन्तौ।

## इति पञ्चदशी कथा समाप्ता।

अतोऽहं ब्रवीमि। तुलां लोहसहस्रस्येति। तत्किं पशोरिव निःसंज्ञस्योपदिष्टेन। श्रुतवति प्रज्ञा जले तैलं रक्ते विषं सत्सु संगतं प्रेम प्रियासु गुह्यमविनीतेषु विसर्पितं कीर्तिमतां च लोके साधुजन्म। कस्मात्।

न जातिधर्मः पुरुषस्य साधुता
चारित्रमूलानि यशांसि देहिनाम्।
अकीर्तिरापच्छतजालकर्षणी
कृतघ्नमन्वेति परत्र चेह च॥ १६६॥

यच्चाजस्रं परार्ध्यगुणपरोऽसि तदपि त्वां प्रकृतिराकर्षति । कथम्

प्रायेणेह कुलान्वितं कुकुलजाः स्त्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूननृजवस्तेजस्विनं पूतराः ।
वैरूप्योपहताश्च कान्तवपुषं सौख्यस्थितं दुःस्थिता
नानाशास्त्रविशारदं च पुरुषं निन्दन्ति मूर्खाः सदा ॥१६७॥

अथवा

तस्योपदेशः सफलः सकृदुक्तं हि वेत्ति यः ।
त्वं तु पाषाणनिश्चेष्ट उपदेशेन किं तव ॥ १६८ ॥

किं च मूर्ख त्वया सह संवासोऽपि न श्रेयान् । अन्यथा कदाचित्त्वत्संपर्कादस्माकमप्यनर्थः स्यात् । उक्तं च

लभते पुरुषस्तांस्तान् गुणदोषान् साध्वसाधुसंपर्कात् ।
नानादेशविचारी पवन इव शुभाशुभान् गन्धान् ॥१६९॥
पैशुन्यमात्रकुशलः सौहार्दस्य विनाशकः ।
प्रमाणं त्वादृशो यत्र तत्कार्यं न शुभं भवेत् ॥ १७० ॥

अपि च पिशुनानां न किंचित्स्वार्थमुपपद्यते विनाशादृते । अन्यास्वप्यवस्थासु नैवाकार्यं व्यवस्यन्ति साधवः कर्तुम् । तथा हि

यदकार्यमकार्यमेव त-
न्न बुधस्तत्र मतिं प्रयोजयेत् ।
परयापि तृषा प्रबाधिते-
र्न हि रथ्यागतमम्बु पीयते ॥ १७१ ॥

इत्युक्त्वा तत्सकाशादपेतः करटकः । अथ पिङ्गलकः संजीवकं व्यापाद्य प्रशान्तकोपोऽसृग्दिग्धं पाणिं प्रमृज्यातिशोकार्तः सांनिःश्वसं सपश्चात्तापमिदमब्रवीत् । कष्टं महदिदमकृत्यं मया कृतं द्वितीयमिव शरीरं संजीवकं व्यापादयता । उक्तं च

भूम्येकदेशस्य गुणान्वितस्य
भृत्यस्य वा बुद्धिमतः प्रणाशे ।
भृत्यप्रणाशो मरणं नृपाणां
नष्टापि भूमिः सुलभा न भृत्याः ॥ १७२ ॥

तं चैवमधृतिपरीतं प्रलपन्तं पिङ्गलकं दृष्ट्वा शनैरुपश्लिष्य दमनकोऽब्रवीत् । कतर एष न्यायो नयो वा यत् सपत्नं हत्वाधृतिः क्रियते । उक्तं च

पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत् ।
प्राणद्रोहकरा राज्ञा हन्तव्या भूतिमिच्छता ॥ १७३ ॥

राजा घृणी ब्राह्मणः सर्वभक्षः
स्त्री चावशा दुष्प्रकृतिः सहायः ।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति ॥ १७४ ॥

गच्छ दूरमपि यत्र नन्दसि
पृच्छ बालमपि पण्डितं जनम् ।
देहि देहमपि याचितोऽर्थिने
छिन्धि बाहुमपि दुष्टमात्मनः ॥ १७५ ।

न चायं धर्मो राज्ञां यः किल प्राकृतपुरुषाणां साधारणः । उक्तं च

न मनुष्यप्रकृतिना शक्यं राज्यं प्रशासितुम् ।
ये हि दोषा मनुष्याणां त एव नृपतेर्गुणाः ॥ १७६ ॥

अपि च

सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुरचित्रधनागमा च
वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ १७७ ॥

इति दमनकेन परितोषितः स्वां प्रकृतिमापन्नः पिङ्गलकः पूर्ववद्दमनकसाचिव्येन राज्यसुखमनुभवन्नास्ते ।

इति मित्रभेदं नाम प्रथमं तन्त्रं समाप्तम् ।

# अथ मित्रप्राप्तिर्नाम द्वितीयं तन्त्रम् ।

अथेदमारभ्यते मित्रप्राप्तिर्नाम द्वितीयं तन्त्रम् । यस्यायमाद्यः श्लोकः ।

असाधना वित्तहीना बुद्धिमन्तः सुहृन्मताः ।
साधयन्त्याशु कार्याणि काककूर्ममृगाखुवत् ॥ १ ॥

राजपुत्रा ऊचुः । कथमेतत् । विष्णुशर्मा कथयति । अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तस्य नातिदूरे महान् स्कन्धशाखोपचितः शाल्मलिवृक्षः । तत्र नानादिग्देशादागत्य रात्रौ पक्षिणो निवसन्ति । तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म । स कदाचित् प्रातःसमय आहारार्थमुच्चलित उग्ररूपं स्फुटितकरचरणमतिपरुषशरीरं जालहस्तं सलगुडं द्वितीयमिव कालं पक्षिबन्धव्याधं तद्वृक्षाभ्याशमुपगतमपश्यत् । तं दृष्ट्वा शङ्कितमना अचिन्तयत् । किमयं दुरात्मा चिकीर्षति । किं ममैवानर्थायाहोस्वित् कश्चिदन्योऽस्याध्यवसायः । इति पश्यन्नवस्थितः । असावपि लुब्धकस्तत्र वृक्ष आगत्य जालं वितत्य धान्यकणानवकीर्य नातिदूरे निभृतमवस्थितः । अथ तत्र चित्रग्रीवो नाम कपोतराजः कपोतसहस्रपरिवारो नभसि परिभ्रमंस्तान् कणानपश्यत् प्रलोभितमतिराहारनिमित्तं जालमपतत् सपरिवारो निःशेषं स्नायुपाशैर्बद्धश्च । लुब्धकोऽपि तं दृष्ट्वा प्रहृष्टमना लगुडमुद्यम्याधावत् । चित्रग्रीवोऽपि स्वानुचरानितश्चेतश्च परिभ्रमतो दृष्ट्वा तैर्विचित्रचञ्चुचरणैराकृष्यमाणे जाले तानब्रवीत् । अपाय एष महानस्माकमापतितः । एक एवात्रोपायः । सर्वैरप्येकचित्तैर्भूत्वा खमुत्पत्य सुदूरं गम्यताम् । अन्यथाशक्यं जालमपहर्तुमिति । तथा च तैर्जीवितार्थिभिरनुष्ठितम् । जालमपहृत्येषुक्षेपमात्रं नभसो मार्गमुत्सृज्य वियति प्रस्थिताः । लुब्धकोऽपि जालं पक्षिभिर्नीयमानं दृष्ट्वाभूतपूर्वमिदामि ं चिन्तयन्नूर्ध्वाननो धावन्नेवमवधारयामास ।

संहतास्तु हरन्तीमे मम जालं विहंगमाः ।
यदा तु विवदिष्यन्ति वशमेष्यन्ति मे तदा ॥ २ ॥

चित्रग्रीवोऽपि तं क्रूरमनुयान्तं दृष्ट्वा शीघ्रं गन्तुमारब्धः । लघुपतनकोऽप्याहारचिन्तामुत्सृज्य कौतुकात् कपोतवृन्दमेवानुगतश्चिन्तयति । कथमयं

दुरात्मा कपोतान् प्रति करिष्यतीति । चित्रग्रीवोऽपि तदभिप्रायं ज्ञात्वा सहाव
नाह । अयं दुरात्मा वद्धाशोऽनुधावति लुब्धकः । अतोऽस्माकमदर्शनमेव श्रेयः
सुदूरमुत्पत्य गिरितरुविषमभूभागानामुपरि गम्यतामिति । अथान्तर्हिता जा
गृहीत्वा पक्षिणः । अथ लुब्धकोऽपि तान् दृष्टेरगोचरतां गतान् विज्ञाय निराश
प्रतिनिवृत्तः । चित्रग्रीवोऽपि तं प्रतिनिवृत्तं दृष्ट्वा तानव्रवीत् । भो निवृत्तः
दुरात्मा लुब्धकः । तदस्माकमपि प्रतिनिवृत्य गन्तुं श्रेयो महिलारोप्यमेव । इ
प्रागुत्तरदिग्भागे मम प्रियसुहृद्धिरण्यको नाम मूषकः प्रतिवसति । तत्सकाश
विलम्वितं गच्छामः । सोऽस्माकं पाशांश्छेत्स्यति समर्थश्चायमापद्विमोक्षणायेति
तथेति ते हिरण्यकविलसमीपं प्राप्य संनिपतिताः । हिरण्यकोऽपि नीतिज्ञोऽपा
शङ्कया शतमुखविलं कृत्वा तत्र निवसति । पक्षिपातचकितहृदयो हिरण्यक
निभृतमवस्थितः । चित्रग्रीवोऽपि विलमुखमारोप्यैवमाह । भद्र हिरण्यक । शी
स्तावदिति । तच्च श्रुत्वा विलदुर्गान्तर्गत एव हिरण्यकोऽव्रवीत् । को भव
निति । असावप्याह । चित्रग्रीवोऽहं तव सुहृदिति । सोऽपि तदाकर्ण्य पु
किततनुः प्रहृष्टात्मा ससंभ्रमं निर्गत्य चित्रग्रीवं सपरिवारं पाशवद्धमालोक्य
सविषादमाह । भद्र किमिदम् । कथय कथयेति । स आह । भद्र विद्वान्
किमनेन पृष्टेन । उक्तं च

यस्माच्च येन च यदा च यथा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तदा च तथा च तच्च
तावच्च तत्र च कृतान्तवशादुपैति ॥ ३ ॥

हिरण्यक आह । एवमेतत् ।

सदृशाद्योजनशतात् पश्यतीहामिषं खगः ।
स एव काले संप्राप्ते पाशवन्धं न पश्यति ॥ ४ ॥

शशिदिवाकरयोर्ग्रहपीडनं
गजभुजङ्गमयोरपि वन्धनम् ।
मतिमतां च निरीक्ष्य दरिद्रतां
विधिरहो वलवानिति मे मतिः ॥ ५ ॥

व्योमैकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं
वध्यन्ते निपुणैरगाधसलिलान् मीनाः समुद्रादपि ।

दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ ६ ॥

एवमुक्त्वा हिरण्यकश्चित्रग्रीवस्य पाशं छेत्तुमारब्धः । चित्रग्रीव आह । भद्र मैवं कुरु । प्रथमं मम परिजनस्य पाशाश्छिद्यन्तां तदनु ममापि च । एवं द्वितीये तृतीये हिरण्यकः कुपितोऽब्रवीत् । भद्र कथं स्वव्यसनोपेक्षां कृत्वा परस्य व्यसनमोक्षः क्रियत इति । सोऽब्रवीत् । भद्र न मन्युः कार्यः । अन्यानपि परित्यज्य ममाश्रिता एते सर्वे वराकाः । तत्कथमेतावन्मात्रमपि संमानं न करोमि । तद्यावदयं भवान् मम पाशं न छिनत्ति तावदश्रान्तमेषां छेत्स्यसि । आदौ च मम छिन्ने कदाचिद्भवाञ्छ्रममियात् । तच्चासाधु । यत एवं मयाभिहितम् । तच्छ्रुत्वा प्रहृष्टो हिरण्यकः प्राह । मया तव परीक्षेयं कृता ॥ साध्वाश्रयणीयगुणोपेतोऽसि ।

कारुण्यं संविभागश्च यथा भृत्येषु लक्ष्यते ।
चित्तेनानेन ते शक्या त्रैलोक्यस्यापि नाथता ॥ ७ ॥

एवमुक्त्वा सर्वेषां पाशछेदः कृतः । मुक्तबन्धनस्तु चित्रग्रीवो हिरण्यकमापृच्छ्य संप्रेषित उत्पत्य सपरिवारः स्वाश्रयं ययौ । हिरण्यकोऽपि स्वं दुर्गं प्रविष्टः । लघुपतनकोऽपि सर्वं तं चित्रग्रीवबन्धमोक्षं विलोक्य साश्चर्यं व्यचिन्तयत् । अहो बुद्धिरस्य हिरण्यकस्य शक्तिश्च दुर्गस्य सामग्री च । तन्ममापि युक्तं हिरण्यकेन सह चित्रग्रीववत् प्रीतिकरणम् । येनास्माकमपीदृशानि पाशबन्धनव्यसनान्युत्पद्यन्त इति । एवं संप्रधार्य तस्मात्पादपादवतीर्य बिलद्वारमाश्रित्य पूर्वोपलब्धनामानं हिरण्यकं समाहूतवान् । भद्र हिरण्यक इतस्तावदिति । तच्छ्रुत्वा हिरण्यको व्यचिन्तयत् । किमन्योऽपि कश्चित् सावशेषबन्धनः कपोतोऽवतिष्ठते यो मां व्याहरति । आह च । भोः को भवान् । स आह । लघुपतनको नाम वायसोऽहम् । तच्छ्रुत्वा हिरण्यकोऽभ्यन्तरात्तं दरीद्वारगतं वायसं दृष्ट्वाब्रवीत् । अपगम्यतामस्मात् स्थानादिति । वायसोऽब्रवीत् । अहं चित्रग्रीवमोक्षणं त्वत्सकाशाद्दृष्ट्वा त्वया सह मित्रत्वमिच्छामि । तत् कदाचिन्ममापीदृग्व्यसने जाते तव पार्श्वान्मुक्तिर्भवति । तन्मामवश्यं मैत्र्येणानुग्रहीतुमर्हति भवान् । हिरण्यको विहस्याह । का त्वया सह मम मैत्री ।

यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् ।
नोदके शकटं याति न नावा गम्यते स्थले ॥ ८ ॥
यद्येन युज्यते लोके बुधस्तत्तेन योजयेत् ।
अहमन्नं भवान् भोक्ता कथं प्रीतिर्भविष्यति ॥ ९ ॥

वायस आह ।

भक्षितेनापि भवता नाहारो मम पुष्कलः ।
त्वयि जीवति जीवेयं चित्रग्रीव इवानघः ॥ १० ॥

तेन हि न युक्तं प्रार्थयमाने मयि भवतोऽनादरं कर्तुम् ।

तिरश्चामपि विश्वासो दृष्टः समयनिश्चयः ।
सतां हि साधुशीलत्वात्त्वचित्रग्रीवयोरिव ॥ ११ ॥
साधोः प्रकुपितस्यापि न मनो याति विक्रियाम् ।
न हि तापयितुं शक्यं समुद्राम्भस्तृणोल्कया ॥ १२ ॥
गुणा अनुक्ता अपि ते स्वयं यान्ति प्रकाशताम् ।
छाद्यमानापि सौगन्ध्यमुद्गमत्येव मालती ॥ १३ ॥

तच्छ्रुत्वा हिरण्यकोऽब्रवीत् । भद्र स्वभावचपलस्त्वम् । उक्तं च

आत्मनश्चपलो नास्ति कुतोऽन्येषां भविष्यति ।
तस्मात्सर्वाणि कार्याणि चपलो हन्त्यसंशयम् ॥ १४ ॥

तदपगम्यतामस्माद्दुर्गोपरोधस्थानादिति । सोऽब्रवीत् भद्र चपलो व चपल इति किमनेन निष्ठुरवचनेन । निश्चयोऽयं मया तावद्भवद्गुणाकृष्टे त्वया सह मैत्र्यमवश्यं कर्तव्यमिति । हिरण्यक आह । भोस्त्वया वैरिणा सह कथं मैत्रीं करोमि । उक्तं च

शत्रुणा न हि संदध्यात् सुश्लिष्टेनापि संधिना ।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ १५ ॥

वायस आह । भोस्त्वया सह मम दर्शनमपि नास्ति कुतो वैरम् तत्किमनुचितं वदसि । ततो विहस्य हिरण्यकोऽब्रवीत् । भद्र । इह तावल्लोके द्वे वैरे शास्त्रदृष्टे सहजं कृत्रिमं च । तत्सहजवैरी त्वमस्माकम् । वायस आह । भो द्विविधस्यापि वैरस्य लक्षणं श्रोतुमिच्छामि । तत्कथ्यताम् । ह आह । भोः कारणेन निर्वृत्तं कृत्रिमम् । तत्तदर्होपकारकरणाद्गच्छति । स्वाभावि कं च पुनः कथमपि नापगच्छति । तच्च स्वाभाविकं वैरं द्विविधं भवत्यैकाङ्गवै

रमुभयवैरं च। वायस आह। कस्तयोर्विशेषः। सोऽब्रवीत्। यो विहन्यात्परस्परमन्योन्येन भक्ष्यते परस्परापकारात्तदुभयवैरं यथा सिंहगजानाम्। यः पूर्वमेव हत्वा भक्षयति न चासौ तस्यापकरोति न हिनस्ति न भक्षयति। तदेकाङ्गवैरमकस्माद्यथाश्वमहिषाणां मार्जारमूषकाणामहिनकुलानाम्। किमश्वो महिषस्य सर्पो वा वभ्रोर्मूषको वा मार्जारस्यापकरोति। तत्सर्वथा किमशक्येन समयकारणेन। अपि च

सुहृदयमिति दुर्जनेऽस्ति काशा
　बहु कृतमस्य मयेति लुप्तमेतत्।
स्वजन इति पुराण एष शब्दो
　धनलवमात्रनिबन्धनो हि लोकः ॥ १६ ॥

अन्यच्च

इष्टो वा बहुसुकृतोपलालितो वा
　श्लिष्टो वा व्यसनशताभिरक्षितो वा।
दौःशील्याज्जनयति नैव जात्वसाधु-
　र्विस्रम्भं भुजग इवाङ्कमध्यसुप्तः ॥ १७ ॥

महताप्यर्थसारेण यो विश्वसिति शत्रुषु।
भार्यासु च विरक्तासु तदन्तं तस्य जीवितम् ॥ १८ ॥

सकृद्दुष्टं तु यो मित्रं पुनः संधातुमिच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १९ ॥

अपराधो न मेऽस्तीति नैतद्विश्वासकारणम्।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥ २० ॥

वायस आह। श्रुतं मयैतत्। तथापि सर्वात्मना त्वया सह मैत्रीं करिष्यामि। शक्यं चैतत्। तथाहि।

द्रवत्वात्सर्वलोहानां निमित्तान् मृगपक्षिणाम्।
भयाल्लोभाच्च मूर्खाणां संगतं दर्शनात्सताम् ॥ २१ ॥

किंच

मृद्घटवत्सुखभेद्यो दुःसंधानश्च दुर्जनो भवति।
सुजनस्तु कनकघटवद्दुर्भेद्यः संधनीयश्च ॥ २२ ॥

एतैर्गुणैरुपेतो भवदन्यः को मया प्राप्तव्यः। तथा त्वया समयो मे

युक्त एव स्यात् । नो चेदनाहारेणात्मानं तव द्वारि व्यापादयिष्यामि । तच्छ्रुत्वा हिरण्यकोऽब्रवीत् । प्रत्यायितोऽहं भवता । तद्भवतु भवतोऽभिमतम् । परं मया त्वद्बुद्धिपरीक्षणार्थमेतदभिहितं यथा यद्येवं मां विनाशयसि मा किल भवान् मंस्यतेऽज्ञोऽयं मया बुद्धिकौशलेनाभिहित इति । यत एतन्मया भवतः प्रदर्शितम् अधुना त्वदङ्कगतं मे शिरः । एवमुक्त्वा निर्गन्तुमारब्धः । ईषच्चार्धनिर्गतः पुनरेवावस्थितः । ततो वायसेनाभिहितः । भद्र किमद्यापि ममोपरि किञ्चिदविश्वासकारणं यद्दुर्गान्न निर्गच्छसि । सोऽब्रवीत् । अस्ति किंचिद्वक्तव्यम् । इह हि चित्तवित्ताभ्यां लोको यापयति । तयोर्वैरम् । चित्तसंगमं वृद्धये न पुनर्वित्तम् प्रभूतानपि विनाशाय कश्चिल्लावकेभ्यस्तिलान् प्रयच्छति । किमसावुपकाराय न मूलोच्छित्तये ।

नोपकारः सुहृच्चिह्नं नापकारोऽरिलक्षणम् ।
प्रदुष्टमप्रदुष्टं वा चित्तमेवात्र कारणम् ॥ २३ ॥

नाहमुपलब्धचित्तस्त्वत्तो बिभेमि । किं तु त्वदीयान्यमित्रपार्श्वात् कदाचिन्मम विश्वस्तस्य विनाशः स्यादिति । अथासावाह ।

गुणवन्मित्रनाशेन यन्मित्रमुपलभ्यते ।
शालिस्तम्बविरोद्धारं श्यामाकमिव तत्त्यजेत् ॥ २४ ॥

तच्च श्रुत्वा सत्वरं निर्गत्य सादरं परस्परं समागतौ ।

प्रीतिं निरन्तरां कृत्वा दुर्भेदां नखमांसवत् ।
मूषको वायसश्चैव गतावेकारिमित्रताम् ॥२५ ॥

सुमुहूर्तं च स्थित्वा हिरण्यको वायसं संभोज्य विसृज्य गृहं प्रविष्टः वायसोऽपि स्वस्थानं गतः । लघुपतनकोऽपि किंचिद्वनगहनमनुप्रविश्य शार्दूल व्यापादितमेकं वनमहिषं दृष्ट्वा तत्र प्रकाममाहारं कृत्वा मांसपेशीमादाय हिरण्य कांतिकमेवागतस्तं चाहूतवान् । एह्येहि भद्र हिरण्यक भक्ष्यतामिदं मयोपनीतं मांसमिति । तस्यापि च कृते तेन हिरण्यकेनादृतेन भूत्वा श्यामाकतण्डुलानां निस्तुषाणां सुमहान् पुञ्जः कृतः । आह च । सखे भक्ष्यन्तामिमे स्वसामर्थ्येन मयोपनीतास्तण्डुला इति । ततस्तौ च परस्परं सुतृप्तावपि स्नेहसूचनार्थं भक्षितवन्तौ प्रतिदिनं च तयोः कुशलप्रश्नैर्विश्रम्भालापैश्च लोकातीतस्नेहपुरःसरं कालोऽतिवर्तते । अथ कदाचिद्वायसः समागत्य हिरण्यकमाह । भद्र हिरण्यक

अहमस्मात्स्थानादन्यत्स्थानं गच्छामि । सोऽब्रवीत् । वयस्य किं निमित्तम् । असावकथयत् । निर्वेदात् । हिरण्यक आह । कस्ते निर्वेदः । स आह । प्रतिदिनं मे चञ्चुभरणमुत्पद्यते सततं दृष्टपाशबन्धनप्रत्यवायाः पतत्रिणो वित्रस्यन्ते । तदलमीदृशेन प्राणधारणेन । हिरण्यक आह । तर्हि क्व यास्यसि । स आह । अस्तीतोऽविदूरे वनगहनमध्ये महासरः । तत्र चिरोपार्जितं मम प्रियमित्रं मन्थरको नाम कच्छपः प्रतिवसति । स च मत्स्याद्याहारविशेषेण मां संवर्धयिष्यति । तेन सह कालमनुद्वेगेन सुखं यापयिष्यामि । तच्छ्रुत्वा हिरण्यक आह । अहमपि भवता सहागमिष्यामि । ममापीह निर्वेदोऽस्ति । वायस आह । किं भवतोऽपि निर्वेदस्य कारणम् । हिरण्यक आह । भो बहुवक्तव्यमस्ति तत्रैव गत्वा ते सर्वं कथयिष्यामीति । वचनसमकालमेव वायसश्चञ्च्वा मित्रं गृहीत्वा तं ह्रदं विपुलं प्राप्तवान् । अथ मूषकेण सह वायसमायान्तं दूराद्दृष्ट्वा मन्थरको देशकालवित् कोऽयमिति विचिन्त्यात्मशङ्कया पुलिनादुत्प्लुत्याम्भसि निमग्नः । लघुपतनकोऽप्युदकसंघट्टक्षुभितहृदयः किमिदमिति वितर्क्य हिरण्यकं पुनः पुलिनेऽवस्थाप्य विपुलं वृक्षमधिरूढो जिज्ञासुः । तत्रस्थश्चाब्रवीत् । भो मन्थरक । आगच्छागच्छ तव मित्रमहं लघुपतनको नाम वायसश्चिरात्सोत्कण्ठः समायातः । तदागत्यालिङ्गय माम् । तच्छ्रुत्वा निपुणतरं परिज्ञाय पुलकिततनुरानन्दाश्रुप्लुतनयनः सत्वरं सलिलान्निष्क्रम्य न मया परिज्ञातोऽसीति ममापराधः क्षम्यतामिति ब्रुवन् मन्थरको वृक्षोत्तीर्णं लघुपतनकमालिङ्गितवान् । ततश्च तेन तयोः सहर्षमातिथ्यं कृत्वा वायसः पृष्टः । वयस्य कुतस्त्वं कथं भवान् मूषकं गृहीत्वा निर्जनं वनमागतः । कश्चायं मूषकः । वायस आह । वयस्य अयं हिरण्यको नाम मूषकः । यस्य जिह्वासहस्रं स्यात् सोऽस्य दीर्घायुषो गुणविस्तरं यथावस्थितं ब्रूयात् । साधु चेदमुच्यते ।

आजीवितान्ताः प्रणयाः कोपाश्च क्षणभङ्गुराः ।
परित्यागाश्च निःसङ्गा न भवन्ति महात्मनाम् ॥ २६ ॥

इत्युक्त्वा यथावृत्तं तस्मै चित्रग्रीवमोक्षणमाख्यातवानात्मनश्च तेन सह संगतम् । मन्थरकोऽपि हिरण्यकगुणमाहात्म्यश्रवणविस्मितो हिरण्यकमपृच्छत् । अथ केन निर्वेदेन केन वा परिभवकारणेन स्वदेशमित्रबन्धुकलत्रादिपरित्यागो भवता व्यवसित इति । वायस आह । मयाप्ययं तदेवादौ पृष्ट आसीत् परमनेना-

भिहितं यद्बहु वक्तव्यमस्ति तत्रैव गतः कथयिष्यामि । ममापि न निवेदितम् । तद्भद्र हिरण्यक । इदानीं निवेद्यतामुभयोरप्यावयोस्तदात्मनो वैराग्यकारणम् । अथ हिरण्यकोऽकथयत् ।

## अथ मूषकपरिव्राट्कथा नाम प्रथमा कथा ।

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तस्य नातिदूरे परिव्राजकावसथः । तत्र चूडाकर्णो नाम परिव्राट् प्रतिवसति स्म । स च भिक्षावेलायां तस्मान्नगरात् सखण्डगुडदाडिमगर्भाणां स्निग्धद्रव्यपेशलानामन्नविशेषाणां भिक्षाभाजनं परिपूर्णं कृत्वा तमावसथमवगम्य यथाविधि प्राणयात्रां कृत्वा तच्च भोजनशेषं भिक्षान्नं भिक्षापात्रे सुगुप्तं स्थापयित्वा प्रात्यूषिकपरिचारकार्थं तद्भिक्षापात्रं नागदन्तके विलम्ब्य रात्रौ स्वपिति । अहं च तदन्नमुत्प्लुत्य प्रत्यहं भक्षयामि सपरिजनस्तेन प्रवर्ते । एवं सुप्रयत्नमवस्थापितेऽपि तस्मिन्नन्ने भक्ष्यमाणे स परिव्राड् निर्विण्णो मत्प्रति भयात् स्थानात् स्थानमुच्चैस्तरं परिसंक्रामयति । तथापि तदहमनायासेनैव प्राप्नोमि भक्षयामि च । अथैवं गच्छति काले कदाचित् तस्य प्रियसुहृद् बृहत्स्फिग्नाम परिव्राजको प्राघूर्णकः समायातः । स चूडाकर्णस्तस्य स्वागताद्युपचारं कृत्वा कृतयथोचितव्रतकालस्तत्र रात्रौ खट्वासीनः शयनगतं बृहत्स्फिजमपृच्छत् । भवान् यतो मया वियुक्तस्तत आरभ्य केषु देशान्तरेषु तपोवनेषु वा परिभ्रान्त इति । असावकथयत् । अथ कदाचिदहं महाकार्तिक्यां महातीर्थवरे पुष्करे स्नानं कृत्वा महतो जनसमूहदोषाद्भवता वियुक्तः । ततोऽहं गङ्गाद्वारप्रयागवाराणस्यादिष्वनुकूलप्रतिकूलां जाह्नवीमनुपर्यटन् किंबहुना कृत्स्नं महीमण्डलं समुद्रपर्यन्तमवलोकितवान् । अर्धाख्याते च तस्मिंश्चूडाकर्णो मम त्रासार्थं मुहुर्मुहुर्जर्जरवंशेन भिक्षापात्रं ताडयन्नवादयत् । कथ्यमानविघ्ने च क्रियमाणे कुपितो बृहत्स्फिगुवाच । अहं मादृतो भूत्वा भवतः कथयामि किमिति भवाननादरो गर्वित इव मम कथायां विरक्तोऽन्यासक्तः । चूडाकर्णो लज्जित आह । भद्र न मन्युः करणीयो नाहं विरक्तः । किं तु पश्यायं मूषको मम महापकारी सदा प्रोन्नतस्थाने धृतमपि भिक्षापात्रमुत्प्लुत्यारोहति भिक्षाशेषं च तत्रस्थं भक्षयति न चाहमेनं शक्नोमि निवारयितुम् । तन्मूषकत्रासार्थमेतेन जर्जरवंशेन भिक्षापात्रं मुहुर्मुहुस्ताडयामि । नान्यत् कारणमिति । सोऽब्रवीत् । किमसौ

एकको़ऽत्र मूषक उतान्येऽपि मूषकाः । सोऽब्रवीत् । किमन्यैर्मूषकैः । एकोऽयं मां दुष्टो योगीवाजस्रं छलयति । तच्छ्रुत्वासावाह । न मूषकमात्रस्येदृशी शक्तिर्भवति । किं तर्हि कारणेनात्र भवितव्यम् । उक्तं च

नाकस्माच्छाण्डिली माता विक्रीणाति तिलैस्तिलान् ।
लुञ्चितॉंल्लुञ्चितैरेव कार्यमत्र भविष्यति ॥ २७ ॥

चूडाकर्ण आह । कथं चैतत् । स आह ।

## अथ लुञ्चिततिलकथा नाम द्वितीया कथा ।

अहं कदाचिदभ्यर्णासु वर्षासु कस्मिंश्चिदधिष्ठाने स्थितिग्रहणनिमित्तं कंचिद्ब्राह्मणमावासार्थं प्रार्थितवांस्तस्य च गृहेऽहं स्थितः । अथान्यस्मिन्नहनि प्रत्यूषे प्रबुद्धोऽहं जालकान्तरितयोर्ब्राह्मणब्राह्मण्योः संवादं दत्तावधानः शृणोमि । तत्र ब्राह्मणः प्राह । ब्राह्मणि श्वः पर्वकालो भविता । तत्र त्वया यथाशक्ति ब्राह्मणभोजनं कर्तव्यमिति । असावाह बहुपरुषाक्षरया गिरा । कुतस्ते ब्राह्मणभोजनस्य शक्तिरत्यन्तदरिद्रस्येति । एवमुक्तोऽसौ कूपे प्रक्षिप्त इव न वचः किंचिदवोचत् । पुनरपि चिरादब्रवीत् । ब्राह्मणि नैतद्युज्यते वक्तुम् । दरिद्रैरपि स्वल्पाल्पेतरमपि समये पात्रे देयम् । उक्तं च

कर्तव्यः संचयो नित्यं न तु कार्योऽतिसंचयः ।
अतिसंचयशीलोऽयं धनुषा जम्बुको हतः ॥ २८ ॥

साब्रवीत् । कथं चैतत् । सोऽब्रवीत् ।

## अथातिलुब्धशृगालकथा नाम तृतीया कथा ।

अस्ति कस्मिंश्चिदधिष्ठाने मांसवृत्तिर्व्याधः । स चैकदा प्रत्युषस्युत्थाय यन्त्रितसायको वने पापर्द्धिं कर्तुं प्रस्थितः । शीघ्रमेव मृगमेकं व्यापाद्य मांसमादाय प्रत्यागच्छन् महति तीर्थावतारेऽवतरन् महिषशावतुल्यमुद्धृतविषाणं कर्दमपिण्डावलिप्तगात्रं सूकरमपश्यत् । तं दृष्ट्वाशुभनिमित्तप्रचोदितो भयमागतः प्रतिनिवृत्य च प्रतिबद्धगतिः सूकरेण मृगमांसं संकोचितकं भूमौ प्रक्षिप्य धनुराकृष्य तस्मै विषदिग्धमिषुं प्राहिणोज्जत्रुस्थाने विद्ध्वा परपार्श्वगतं च कृतवान् । सूकरेणापि प्रहारमूर्छितेनोत्तमं जवमास्थायावस्करप्रदेशे तथाभ्याहतो येन गतासुर्विधागतशरीरो भूतले निपतितः । अथ लुब्धकं व्यापाद्य सूकरोऽपि शरप्र-

हारवेदनया पञ्चत्वं गतः। अथानन्तरं क्षुत्क्षामकुक्षिर्दीर्घरावो नाम जम्बुक आहारार्थी परिभ्रमंस्तमुद्देशमागतस्तान् मृतान् मृगव्याधसूकरानपश्यत्। तांश्च दृष्ट्वा प्रहृष्टो व्यचिन्तयत्। भोः। अनुकूलो मे विधिः। तेनैतदचिन्तितं भोजनं समुपस्थितम्। तदहं तथा भक्षयामि यथा बहून्यहानि मे प्राणयात्रा भवति।

नान्नपानानि सततमुत्पद्यन्ते हि देहिनाम्।
लब्ध्वा प्रभूतमन्नाद्यं क्रमशस्तूपयोजयेत्॥ २९॥

तत्तावन् मृगसूकरव्याधान् कूटीकृत्यैनं स्नायुपाशं धनुष्कोटिगतं भक्षयामि। एवमुक्त्वा धनुष्प्रतिबन्धं मुखे प्रक्षिप्य स्नायुं भक्षयितुमारब्धः। ततश्च छिन्ने प्रतिबन्धे धनुषा तालुप्रदेशे निर्भिन्नः पञ्चत्वमुपगतः।

## इति तृतीया कथा समाप्ता।

अतोऽहं ब्रवीमि। कर्तव्यः संचयो नित्यमिति। तच्च श्रुत्वा ब्राह्मण्याह। यद्येवं तदस्ति मे तिलस्तोकं तण्डुलस्तोकं च। स त्वं प्रत्युषस्युत्थाय सभिक्षुशाद्यानयनार्थं वनं गच्छ। अहमपि सहानेन शिष्येण कामन्दकिना ब्राह्मणत्रयस्य साधयिष्यामि कृसरामिति। ततः प्रभाते तया ते तिला लुञ्चित्वा कामन्दकिनाधिष्ठिताः परिपालयेति सूर्यातप आस्थापिताः। अत्रान्तरे तस्या गृहकर्मव्यग्रत्वात् तस्मिन्ननवहिते ते तिलाः शुनागत्य प्राश्य विट्टालिताः। तद्दृष्ट्वा साब्रवीत्। कामन्दके न शोभनमापतितम्। विघ्नमुत्पन्नं ब्राह्मणतर्पणस्य। तथापि गच्छेमांस्तिलाँल्लुञ्चितानपि कृष्णतिलैः परावर्तयित्वा शीघ्रमागच्छ। कृष्णकृसरमेव करिष्यामि। तथा चानुष्ठिते यस्मिन्नेव गृहेऽहं भिक्षार्थमुपगतस्तस्मिन्नेव गृहे कामन्दकिरपि तिलविक्रयार्थमनुप्रविष्टोऽकथयत्। गृह्यन्तामिमे तिलाः। परिवर्तमाने व्यवहारे गृहपतिः समायातः। तेनाभिहितम्। कथं तिलाः परिवर्त्यन्ते। सा तमाह। समार्घास्तिला मया लब्धाः शुक्लाः कृष्णैः। ततोऽसौ विहस्याब्रवीत्। कारणेनात्र भवितव्यम्। अतोऽहं ब्रवीमि। नाकस्माच्छाण्डिली माता। इति।

## इति द्वितीया कथा समाप्ता।

एवमाख्यायाब्रवीत् परिव्राट्। चूडाकर्ण। अत्राप्यनिवारितशक्तेर्मूषकस्य

भिक्षाभक्षणे केनापि कारणेन भवितव्यम् । अस्ति किंचित् खनित्रकमिति । स आह । बाढमस्ति । एषा सुहस्तिका सर्वलोहमयी । उपनीते च तस्मिन् कक्ष्यां बद्ध्वा संदष्टौष्ठपुटः पृष्टवान् । कतरस्तस्य संचरणमार्ग इति । आख्याते च तस्मिंस्तेन खनित्रेण मद्विवरं खनितुमारब्धः । अहं चादावेव तयोरात्मगतमालापं श्रुत्वाहारमुत्सृज्य कौतुकपरोऽवस्थित आसम् । यदा त्वसौ दुर्गान्वेषणं कर्तुमारब्धस्तदा मया ज्ञातम् । उपलब्धमनेन दुरात्मना मदीयविवरद्वारमिति । मयापि केनापि साधुना पूर्वस्थापितं सुवर्णमाप्तमासीत् । तत्प्राधान्याच्चाहं शक्तिमन्तमात्मानं मन्ये । असावपि दुष्टो विवरानुसारात्तदुपलभ्य गृहीत्वा च धनं पुनरावसथं प्राप्तश्चूडाकर्णमब्रवीत् । इदं तस्य तद्ब्रह्मन् सुवर्णं हृदयस्याप्यसौ सामर्थ्यादशक्यमपि स्थानमुत्पतति । अर्धार्धं च विभज्य सुखासीनौ स्थितौ । तं चाहमात्मनोऽवसादं प्राप्याचिन्तयम् । कदाचिदिहस्थस्य मे प्रदीपमुज्ज्वाल्याशंसयमासाद्य मां हन्युः । इति तस्मात् स्थानादन्यद्दुर्गस्थानं कृतवान् । अन्ये च ये ममानुचरास्त आगत्य मामब्रुवन् । भद्र हिरण्यक त्वत्समीपवर्तिनो वयमत्यन्तक्षुधार्ताः । ग्रासमात्रमप्यस्माकं नास्ति । अस्तंगतेऽपि दिवसे न किंचिदस्माभिरासादितम् । तदर्हस्यद्यापि तावदस्मान् संतर्पयितुमिति । तथा नामेत्युक्त्वाहमावसथं तैः समं गतः । अथास्मत्परिग्रहशब्दमाकर्ण्य चूडाकर्णोऽपि भूयो भिक्षापात्रं जर्जरवंशेन ताडयितुं प्रवृत्तः । तेनाभिहितः । किमद्यापि निराकृते तस्मिन् मुहुर्मुहुश्चालयसि वंशम् । स्थीयतामलमिति । ततोऽसावाह । भद्र । एष ममापकारी मूषकः पुनः पुनरायाति । तद्भयादेतत् करोमि । ततो विहस्याभ्यागतः प्रोवाच । सखे मा भैषीर्वित्तेन सह गतोऽस्य कूर्दनोत्साहः । यतः सर्वेषामपि जन्तूनामियमेव स्थितिः । अथाहं तच्छ्रुत्वा कोपाविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितोऽप्राप्त एव भूमौ निपतितश्च । ततो मां दृष्ट्वा स मे शत्रुर्विहस्य चूडाकर्णमुवाच । सखे पश्य पश्य कौतूहलम् । उक्तं च यतः ।

अर्थेन बलवान् सर्वोऽप्यर्थाद्भवति पण्डितः ।
पश्येमं मूषकं पापं स्वजातिसमतां गतम् ॥ ३० ॥

तत्स्वपिहि त्वं गतशङ्कः । यदस्योत्पतने शक्तिकारणं तदावयोरेव हस्तगतं जातम् । तच्छ्रुत्वाहं मनसा विचिन्तितवान् । सत्यमाहायम् । यतो ममाद्य

निजशक्तिहीनस्य सत्त्वोत्साहरहितस्याहारमप्युत्पादयितुमङ्गुलमात्रमप्युत्पतने शक्तिर्नास्ति। शृणोमि चानुचराणां परस्परालापम्। आगच्छत गच्छामः। अयमात्मनोऽप्युदरभरणे न समर्थः किं पुनरन्येषाम्। तत्किमनेनाराधितेन। ततोऽहं परिचिन्त्यैतावदिति स्वमालयं गतः। प्रभातसमये सर्व एव सपत्नसकाशं गता दरिद्रोऽसाविति वदन्तः। तथा प्रवृत्तानामनुचराणामेकोऽपि न मत्सकाशमागच्छत्। पश्यामि च। मां दृष्ट्वा संमुखं त एव मत्सपत्नैः सह परस्परं किलकिलायन्तो हस्तास्फालनैर्ममानुचराः संक्रीडन्ति। चिन्तितं च मया यथा। एवमेतत्।

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः॥ ३१॥

अपि च

अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा॥ ३२॥

त्यजन्ति मित्राणि धनेन हीनं
पुत्राश्च दाराश्च सहोदराश्च।
तमर्थवन्तं पुनरेव यान्ति
ह्यर्थोऽत्र लोके पुरुषस्य बन्धुः॥ ३३॥

शून्यमपुत्रस्य गृहं हृच्छून्यं यस्य नास्ति सन्मित्रम्।
मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य॥ ३४॥

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव
चान्यः क्षणेन भवतीत्यतिचित्रमेतत्॥ ३५॥

तन्मादृशानां किं नाम तद्वरं स्यात्। यस्येदृशः फलविपाकः। तत्सर्वथा धनहीनस्य ममाधुना नेह श्रेयः। उक्तं च

वसेन्न मानाधिकं वासं भग्नमानं न संश्रयेत्।
मानहीनं सुरैः सार्धं विमानमपि वर्जयेत्॥ ३६॥

एवमुक्त्वाप्यहं पुनरप्येवमचिन्तयम्। किमर्थितां कस्यचित्करोमि तदे-

तद्याञ्चाजीवनं कष्टतरम् । यतः

कुब्जस्य कीटखातस्य दावनिष्कुषितत्वचः ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥ ३७ ॥
कण्ठे गद्गदता स्वेदो मुखे वैवर्ण्यवेपथू ।
म्रियमाणस्य यान्येव तानि चिह्नानि याचतः ॥ ३८ ॥
दौर्भाग्यायतनं धियोऽपहरणं मिथ्याविकल्पास्पदं ।
पर्यायो मरणस्य दैन्यवसतिः शङ्कानिधानं परम्
मूर्तं लाघवमाश्रयश्च विपदां तेजोहरं मानिनां
अर्थित्वं हि मनस्विनां न नरकात् पश्यामि वस्त्वन्तरम् ॥ ३९ ॥

अपि च

निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान् निर्वेदमागच्छति ।
निर्विण्णः शुचमेति शोकमनसो बुद्धिः परिभ्रश्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ ४० ॥

अपि च

वरमहिमुखे क्रोधाविष्टे करौ विनिवेशितौ
विषमपि वरं पीत्वा सुप्तं कृतान्तनिवेशने ।
गिरिवरतटादात्मा मुक्तो वरं शतधा गतो
न तु खलजनावाप्तैरर्थैः प्रियं कृतमात्मनः ॥ ४१ ॥
वरं विभवहीनेन प्राणैः संतर्पितोऽनलः ।
नोपचारपरिभ्रष्टः कृपणोऽभ्यर्थितो जनः ॥ ४२ ॥

अथ चैवं गते केन नामान्योपायेन जीवितं स्यात् । किं चौर्येण । तदपि परस्वादानात् कष्टतरं । यत्कारणम्

वरं कार्यं मौनं न च वचनमुक्तं यदनृतं
वरं क्लैव्यं पुंसां न च परकलत्राभिगमनम् ।
वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरति-
र्वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥ ४३ ॥

अथ किमहं परपिण्डेनात्मानं यापयामि । कष्टं भोः । तदपि द्वितीयं मृत्युद्वारम् । यतः

रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥ ४४ ॥

तत् सर्वथा तदेव बृहत्स्फिगापहृतं धनमात्मीकरोमि । मया हि तयोर्दुरात्मनोरुपधानीकृता धनपेटिका दृष्टास्ति । तद्वित्तं स्वदुर्गं आनयामि येन भूयोऽपि मे वित्तप्रभावेनाधिपत्यं पूर्ववद्भवति । एवं च संप्रधार्य रात्रौ तत्र गत्वा निद्रावशमुपगतस्य तस्य मयोपश्लिष्टेन पेटिकायां यावच्छिद्रं कृतं तावत्प्रबुद्धोऽसौ तापसः । ततश्च जर्जरवंशलगुडेन तेनाहं शिरसि ताडितः । कथंचिदायुःशेषतया निर्गतोऽहं बिलमाविशं न मृतश्च । पुनरपि चिराद्बद्धाशः समाश्वस्य दीनारान्तिकमुपश्लिष्टस्तेन निर्दयेनैवं यष्ट्या शिरस्यभिहतो येनाद्यापि स्वप्नगतानामपि तादृशानामुद्विजे । पश्य चेमं तत्कालकृतं शिरसि मे व्रणम् । साधु चेदमुच्यते ।

सर्वप्राणविनाशसंशयकरीं प्राप्यापदं दुस्तरां
प्रत्यासन्नभयो न वेत्ति विधुरं स्वं जीवितं काङ्क्षति ।
उत्तीर्णस्तु ततो धनार्थमपरां भूयो विशत्यापदं
प्राणानां च धनस्य साधनधियामन्योन्यहेतुः पणः ॥ ४५ ॥

सोऽहं बहु विचिन्त्यास्तां धनमेतन्ममेति निवृत्तस्तृष्णातः । साधु चेदमुच्यते ।

ज्ञानं चक्षुर्न तु दृक् शीलं सुकुलीनता न कुलजन्म ।
संतोषश्च समृद्धिः पाण्डित्यमकार्यविनिवृत्तिः ॥ ४६ ॥
सर्वाः संपत्तयस्तस्य संतुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥ ४७ ॥
संतोषामृततृप्तानां यत् सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ ४८ ॥
न योजनशतं दूरं वाह्यमानस्य तृष्णया ।
संतुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥ ४९ ॥

तत्सर्वथासाध्येऽर्थे परिच्छेद एव श्रेयान् । उक्तं च

को धर्मो भूतदया किं सौख्यमरोगता जगति जन्तोः ।
कः स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ॥ ५० ॥

इति । एवमवधार्याहं निर्जनवनमागतोऽपश्यं चित्रग्रीवं पाशबद्धमिति च तं मोक्षयित्वास्मत्पुण्योदयादनेन लघुपतनकेनाहं स्नेहानुवृत्त्यानुगृहीतः तावदत्रान्तर एष लघुपतनको ममान्तिकमागत्य पृष्टवानिहागमनाय । सोऽहमनेनैव सार्धं भवदन्तिकमागतः । तदेतन्मम निर्वेदकारणम् । अपि च

समृगोरगसारङ्गं सदेवासुरमानुषम् ।
आमध्याह्नात् कृताहारं भवतीह जगत्त्रयम् ॥ ५१ ॥

कृत्स्नामपि महीं जित्वा निकृष्टां प्राप्य वा दशाम् ।
वेलायां भोक्तुकामेन लभ्या तण्डुलसेतिका ॥ ५२ ॥

तस्य कृते बुधः को नु कुर्यात्कर्म विगर्हितम् ।
यस्यानुबन्धः पापीयानधोनिष्ठो विपद्यते ॥ ५३ ॥

## इति प्रथमा कथा समाप्ता ।

तच्च श्रुत्वा मन्थरकस्तं समाश्वासितवान् । भद्र नाधृतिः करणीया यत् स्वदेशपरित्यागो मया कृत इति । बुद्धिमांश्चासि । किं विमुह्यसे । अपि च

शास्त्राण्यधीत्यापि भवन्ति मूर्खा
यस्तु क्रियावान् पुरुषः स विद्वान् ।
संचिन्तितं त्वौषधमातुरं हि
किं नाममात्रेण करोत्यरोगम् ॥ ५४ ॥

न स्वल्पमप्यध्यवसायभीरोः
करोति विज्ञानविधिर्गुणं हि ।
अन्धस्य किं हस्ततलस्थितोऽपि
निवर्तयत्यर्थमिह प्रदीपः ॥ ५५ ॥

दत्त्वा याचन्ति पुरुषा हत्वा हन्यन्त एव हि ।
यातयित्वा च यात्यन्ते नरा भाग्यविपर्यये ॥ ५६ ॥

तदत्र वयस्य दशाविशेषेण वृत्तिः करणीया । न चैतदपि मन्तव्यम् ।

स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः ।
एतज्ज्ञात्वा तु मतिमान्न स्वस्थानं परित्यजेत् ।। ५७ ।।

तत्कापुरुषवृत्तमेतत् । न हि सतां कश्चित् स्वदेशविदेशयोर्विशेषः । यतः

को धीरस्य मनस्विनः स्वविषयः को वा विदेशः स्मृतो
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
यद्दंष्ट्रानखलाङ्गूलप्रहरणैः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ।। ५८ ।।

तद्भद्र नित्यमुद्योगपरेण भवितव्यम् । उद्युक्तानां धनं भोगाः क्व यास्यन्तीति । अपि च

निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः ।
सोद्योगं स्वयमायान्ति सहायाश्च धनानि च ।। ५९ ।।
उत्साहसंपन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदं च
लक्ष्मीः स्वयं वाञ्छति वासहेतोः ।। ६० ।।
अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीणम् ।
प्रमदेव हि वृद्धपतिं नेच्छत्यवगूहितुं लक्ष्मीः ।। ६१ ।।
पटुरिह पुरुषः पराक्रमे । कुमतिरपि प्रभुरर्थसंचये ।।
न हि सदृशमति बृहस्पतेः । शिथिलपराक्रममेति सत्क्रिया ।। ६२ ।।

अर्थरहितोऽपि भवान् प्रज्ञोत्साहशक्तिसंपन्नोऽसामान्यमनुष्यसदृशः कथम् ।

विनाप्यर्थैर्धीरः स्पृशति बहुमानोन्नतिपदं
परिष्वक्तोऽप्यर्थैः परिभवपदं याति कृपणः ।
स्वभावादुद्भूतां गुणसमुदयावाप्तिविपुलां
द्युतिं सैंहीं न श्वा कृतकनकमालोऽपि लभते ।। ६३ ।।
उत्साहशक्तियुतविक्रमधैर्यराशि-
र्यो वेत्ति गोष्पदमिवाल्पतरं समुद्रम् ।

वल्मीकशृङ्गसदृशं च सदा नगेन्द्रं
लक्ष्मीः स्वयं तमुपयाति न दीनसत्त्वम् ॥ ६४ ॥
नात्युच्चशिखरो मेरुर्नातिनीचं रसातलम् ।
व्यवसायद्वितीयानां नात्यपारो महोदधिः ॥ ६५ ॥
सधन इति किं मदस्ते गतविभवः किं विषादमुपयासि ।
करनिहतकन्दुकसमाः पातोत्पाता मनुष्याणाम् ॥ ६६ ॥

तत्सर्वथा जलबुद्बुदा इवास्थिराणि यौवनानि धनानि च । यतः

अभ्रच्छाया खलप्रीतिर्नवसस्यानि योषितः ।
किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ ६७ ॥

तद्भद्र हिरण्यक । एवं ज्ञात्वा हृतेऽप्यर्थे त्वया संतापो न करणीयः । उक्तं च

यदभावि न तद्भावि भावि यन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ ६८ ॥

तत्सर्वथा वृत्तिचिन्ताकुलतां परिभूय स्थीयताम् ।

येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः ।
मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥ ६९ ॥
नैवार्थो व्यसनगतेन शोचितव्यो
हर्षो वा सुखमुपलभ्य न प्रयोज्यः ।
प्राक्कर्म प्रति जनितो हि यो विपाकः
सोऽवश्यं भवति नृणां शुभोऽशुभो वा ॥ ७० ॥
कर्तव्यः प्रतिदिवसं प्रसन्नचित्तैः
स्वल्पोऽपि व्रतनियमोपवासधर्मः ।
प्राणेषु प्रहरति नित्यमेव मृत्यु-
र्भूतानां महति कृतेऽपि हि प्रयत्ने ॥ ७१ ॥
दानेन तुल्यो निधिरस्ति नान्यः
संतोषतुल्यं सुखमस्ति किं वा ।
विभूषणं शीलसमं कुतोऽस्ति
लाभोऽस्ति नारोग्यसमः पृथिव्याम् ॥ ७२ ॥

तत्किं बहुना स्ववेश्मेदं भवतः। निर्वृतनानुद्विग्नेन च भूत्वा त्वया मयैव सह प्रीतिपूर्वमत्र कालो नीयताम् । तच्चानेकशास्त्रार्थानुगतं मन्थरकोक्तं श्रुत्वा लघुपतनको विकसितवदनः परितोषमुपगतोऽब्रवीत्। भद्र मन्थरक। साध्वाश्रयणीयगुणोपेतोऽसि। भवता ह्येवं कृतहिरण्यकाभ्युपपत्तौ मम मनसः परमतुष्टिरुत्पादिता। कोऽत्र विस्मयः। उक्तं च

सुखस्य मण्डः परिपीयते तै-
जीवन्ति ते सत्पुरुषास्त एव ।
हृष्टाः सुहृष्टैः सुहृदः सुहृद्भिः
प्रियाः प्रियैर्ये सहिता रमन्ते ॥ ७३ ॥
ऐश्वर्यवन्तोऽपि हि निर्धनास्ते
व्यर्थश्रमा जीवितमात्रसाराः ।
कृता न लोभोपहृतात्मभिर्यैः
सुहृत्स्वयंग्राहविभूषणा श्रीः ॥ ७४ ॥
सन्त एव सतां नित्यमापत्तरणहेतवः।
गजानां पङ्कमग्नानां गजा एव धुरंधराः ॥ ७५ ।
संरक्षणं साधुजनस्य नित्यं
कार्यं त्वया जीवितसंशयेऽपि।
महोदयानां हि शरीरलाभे
फलं परानुग्रहमात्रमेव ॥ ७६ ॥
श्लाघ्यः स एको भुवि मानवानां
सोऽन्तं गतः सत्पुरुषव्रतस्य ।
यस्यार्थिनो वा शरणागता वा
नाशाविभङ्गाद्विमुखाः प्रयान्ति ॥ ७७ ॥

अथैवं जल्पतां तेषां चित्राङ्गो नाम मृगो लुब्धकत्रासितस्तृषार्तस्तं विपुलह्रदं समागतः। तं चायान्तं दृष्ट्वा ते भयचकितहृदयाः पलायितुमारब्धाः। तस्याभिद्रुतमुदकाभिलाषिणोऽवसरतो वारिसंघट्टश्रवणान् मन्थरकः पुलिनात्त्वरितमम्भसि निमग्नः। हिरण्यकोऽप्याविग्नमनास्तरुस्तम्भविवरमनुप्रविष्टः। लघु-

पतनकोऽपि किमेतदिति जिज्ञासुरुड्डीय विपुलवृक्षमारूढः । चित्राङ्गोऽप्यात्मशङ्कया तटनिकट एव स्थितः । अथ लघुपतनको वियदुत्पत्य योजनप्रमाणं भूमण्डलमवलोक्य पुनर्वृक्षमवलीनो मन्थरकमब्रवीत् । एह्येहि न ते कुतश्चिद्भयमिति । दृष्टं मया केवलं शष्पभुग् मृगो ह्रदमुदकार्थी समागतः । तच्छ्रुत्वा दीर्घदर्शी मन्थरकः समुत्तीर्णः । त्रयोऽपि ते विश्वस्तचित्ताः पुनस्तत्रैव समागताः । अथाभ्यागतवत्सलतया मन्थरकस्तं मृगमाह । भद्र पीयतामवगाह्यतां चोदकं प्रकामतः । कृतार्थो भवानिहागन्तुमर्हतीति । तद्वचनमाधाय चित्राङ्गश्चिन्तयामास । न ममैतेभ्यः सकाशात् स्वल्पमपि भयमस्ति । कस्मात् । कच्छपस्तावदुदकगत एव शक्तिमान् मूषकवायसावपि मृतं क्षुद्रजन्तुं चैव भक्षयतः । तदेताननुसरामि इति मत्वा तैः सह संगतः । मन्थरकेण च स्वागताद्युपचारपुरःसरं समभिहितश्चित्राङ्गः । अपि शिवं भवतः । कथ्यतामस्माकं कथमिदं वनगहनमागतोऽसि । इति । अथासावब्रवीत् । निर्विण्णोऽस्म्यनेनाकामविहारित्वेन । अश्ववारैः सारमेयैर्लुब्धकैरितश्चेतश्च संनिरुध्यमानो भयान् महता जवेनातिक्रम्य सर्वानागतोऽत्राहमुदकार्थी । तदिच्छामि भवद्भिः सार्धं मैत्रीं कर्तुम् । तच्च श्रुत्वा मन्थरकेणाभिहितं । भद्र मा भैषीः स्ववेश्मेदं भवतो निर्विघ्नमत्र यथेप्सितमुष्यतामिति । ततस्तेषां सर्वेषां स्वेच्छया कृताहाराणामजस्रं विपुलवृक्षच्छायायां मध्याह्नवेलायां कृतसमागमानामनेकशास्त्रविवरणव्यापारसक्तचित्तानां परस्परं प्रीत्या कालोऽतिवर्तते । अथ कदाचित् समुचितवेलायां चित्राङ्गो नायातः । तं चापश्यन्तस्ते तत्कालसमुपजातविपरीतनिमित्तव्याकुलितचित्तास्तस्याकुशलं मन्यमाना धृतिं न लेभिरे । तदा लघुपतनकं मन्थरक आह । त्वमभिज्ञोऽस्यस्य कर्मणः शक्तियुक्तत्वात् । तदुपलभस्वोत्प्लुत्य यथावस्थितां चित्राङ्गवार्त्तामिति । तच्छ्रुत्वा लघुपतनक उत्पत्य नातिदूरे गत्वोदकावतारे कीलकावलम्बितदृढचर्मपाशावबद्धं चित्राङ्गमपश्यत् । तं च समेत्य सविषादमब्रवीत् । भद्र कथमिमामापदं प्राप्तस्त्वमिति । तन् चित्राङ्ग आह । भद्र नायमाक्षेपस्य कालः । संजातोऽयं तावन् मम मृत्युः । तन्मा विलम्बस्व यत्कारणं भवाञ्छक्तियुक्तो भवाननभिज्ञः पाशच्छेदनकर्मणः । तद्राशु गच्छ हिरण्यकमानय सोऽप्ययत्नेन पाशच्छेदनसमर्थ इति । अस्त्विति लघुपतनकेन मन्थरकाद्धिरण्यकान्तिके गत्वा चित्राङ्गबन्धनस्वरूपं निवेद्य चित्राङ्गपाश-

मोक्षणं प्रति चोदयित्वा क्षिप्रमेव हिरण्यक आनीतः। तदवस्थं चित्राङ्गं दृष्ट्वाधृतिपरीतो हिरण्यकस्तमाह । वयस्य ज्ञानचक्षुरसि कथमिमामापदं प्राप्त इति । सोऽब्रवीत्। वयस्य किमनेन पृष्टेन । बलवद्धि दैवम् । उक्तं च

किं शक्यं शुभमतिनापि तत्र कर्तुं
यत्रासौ व्यसनमहोदधिः कृतान्तः ।
रात्रौ वा दिवसवरेऽपि वा समग्रे
योऽदृश्यः प्रहरति तस्य को विरोधी ॥ ७८ ॥

अपि च

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति विदुषामपि ॥ ७९ ॥

तत्साधो त्वमभिज्ञोऽसि नियतिविलसितानामतो द्रुतं छिन्धि पाशमिमं यावदसौ लुब्धकः क्रूरकर्मा नायातीति । एवमुक्तो हिरण्यकोऽब्रवीत् । भद्र मा भैषीर्न वर्तते मयि पार्श्वस्थे लुब्धकात् कश्चिदपायः । किंतु कौतुकात् पृच्छामि । नित्यं चकितचार्यसि कथं छलितः । सोऽब्रवीत् । यद्यवश्यं त्वया श्रोतव्यं तदाकर्णय यथाहं पूर्वमनुभूतबन्धनव्यसनोऽपि दैववशात् पुनरधुना बद्धः । सोऽब्रवीत् । कथय कथमत्रानुभूतबन्धनः पूर्वं भवान् । चित्राङ्गोऽब्रवीत् ।

## अथ हरिणपूर्वबन्धनकथा नाम चतुर्थी कथा ।

पूर्वमहं षण्मासजातः शिशुः । सर्वेषामग्रतो विहरामि । लीलया च दूरं गत्वा स्वयूथं प्रतिपालयामि । अस्माकं च द्वे गती ऊर्ध्वाञ्जसी च । तयोरहमाञ्जसीं वेद्मि न चोर्ध्वाम् । अथ कदाचिद्विचरन् यावन् मृगगणान्नानुपश्यामि तावत् सुतरामाविग्नहृदयः क ते गता इति दिशो विलोकयन्नग्रतः स्थितान् पश्यामि । ते चोर्ध्वगत्या जालं व्यतिक्रम्य सर्वेऽपि पुरतो गता मामेव वीक्षमाणास्तिष्ठन्ति । अहं चोर्ध्वगतेरनभिज्ञतयाञ्जस्या गत्या निष्पातितो जालेनाकुलीकृतः । अथ व्याधेनागत्य गृहीतो नीत्वा च क्रीडार्थं राजपुत्रायोपनीतः । स राजपुत्रोऽपि मां दृष्ट्वातीवपरितुष्टो व्याधस्य पारितोषिकं ददौ । मां चाभ्यङ्गोद्वर्तनस्नानभोजनगन्धविलेपनसत्कारैरपि समुचितमनोहराहारैरतर्पयत् । सोऽहमन्तःपुरिकाजनस्य

राजकुमाराणां च हस्ताद्धस्तं गच्छन् कौतुकपरतया ग्रीवानयनकरचरणकर्णावकर्षणादिभिः परिक्लेशितः। अथ कदाचित् तत्रापि राजपुत्रस्य शयनीयाधःस्थेन प्रावृट्कालसमये सविद्युन्मेघस्तनितं श्रुत्वोत्कण्ठितहृदयेन मया स्वयूथमनुस्मृत्येदमभिहितम्।

वातवृष्टिविधूतस्य मृगयूथस्य धावतः।
पृष्ठतोऽनुगमिष्यामि कदा तन्मे भविष्यति॥ ८०॥

अथैकाकी राजपुत्रः साश्चर्यमिदमाह। एक एवाहमत्र केनेदमभिहितमिति संत्रस्तहृदयः समन्तादवलोकयन् मामपश्यत्। दृष्ट्वा च मां न मानुषेणेदमभिहितं किंतु मृगेण। अत एतदौत्पातिकम्। तत्सर्वथा विनष्टोऽस्मि। इति मत्वा परमावेगं गतः। अथ कथंचिद्विस्खलितवागसौ गृहाद्बहिर्निश्चक्राम परमसत्त्वाधिष्ठित इव महदास्वस्थ्यमापेदे। ततः प्रभाते ज्वरपरीतः सर्वभिषग्भूततान्त्रिकान् महत्यार्थमात्रया प्रलोभ्याभिहितवान्। यो ममैतां रुजमपनयति तस्याहमकृशां पूजां करिष्यामीति। अहमपि तत्रासमीक्षितकारिणा जनेन काष्ठेष्टकालगुडप्रहारैर्हन्यमानोऽनेन किं पशुना व्यापादितेनेति वदतायुःशेषतया केनापि साधुना रक्षितः। तेन चार्येण सर्वलक्षणविदा विज्ञापितो राजपुत्रः। भद्र सर्वाः पशुजातयो ब्रुवन्त्येव न परं मानुषसमक्षमनेनैवं भवन्तमदृष्ट्वैव मनोराज्यं कृतम्। अनेन प्रावृट्कालसमयोत्सुकेन स्वयूथमनुस्मृत्येदमभिहितम्। वातवृष्टिविधूतस्येति। तद्भवतः किमसंबद्धं ज्वरकारणम्। तच्च श्रुत्वा राजपुत्रोऽपगतज्वरविकारः पूर्वप्रकृतिमापन्नः। मां चापनीयाभ्यज्य प्रसूतेनाम्भसा प्रक्षालितशरीरं कृत्वा रक्षिपुरुषाधिष्ठितं तत्रैव वने प्रतिमुक्तवान्। तैश्च तथैवानुष्ठितम्। एवमनुभूतपूर्वबन्धनोऽप्यहं पुनर्नियतिवशाद्बद्धः। इति।

## इति चतुर्थी कथा समाप्ता।

अनन्तरमेवं तयोः प्रवदतोः सुहृत्स्नेहाक्षिप्तचित्तो मन्थरकस्तदनुसारेण शरकण्टककुशावमर्दनं कुर्वाणः शनैः शनैस्तानेव समागतः। तं च दृष्ट्वा सुतरामाविग्नचित्तास्ते संपन्नाः। अथ हिरण्यकस्तमाह। भद्र न शोभनं त्वया कृतं यत्त्वद्दुर्गमपहायागतः। अशक्तस्त्वं लुब्धकादात्मानं परित्रातुम्। वयं त्वगम्या-

स्तस्य यत्कारणं यदि स पापात्मा लुब्धकः समागमिष्यति चित्राङ्गो विछिन्नपाशः प्रणश्य यास्यति। लघुपतनकोऽपि वृक्षमारोक्ष्यति। अहमप्यल्पकायत्वाद्दरीविवरमनुप्रवेक्ष्यामि। भवांस्तु तद्गोचरगतः किं करिष्यतीति। मन्थरक आह। भद्र मैवं ब्रूयाः।

दयितजनविप्रयोगो वित्तवियोगश्च कस्य सह्याः स्युः।
यदि सुमहौषधकल्पो वयस्यजनसंगमो न स्यात् ॥ ८१ ॥
प्रविरलमप्यनुभूताः शिष्टेष्टसमागमेषु ये दिवसाः।
पथ्यधनप्रतिमास्ते जीवितकान्तारशेषस्य ॥ ८२ ॥
सुहृदि निरन्तरचित्ते गुणवति दारे प्रभौ च दुःखज्ञे।
विश्राम्यतीव हृदयं दुःखस्य निवेदनं कृत्वा ॥ ८३ ॥

तद्भद्र।

औत्सुक्यगर्भा भ्रमतीव दृष्टिः पर्याकुलं क्वापि मनः प्रयाति।
वियुज्यमानस्य गुणान्वितेन निरन्तरप्रेमवता जनेन ॥ ८४ ॥

एवं तस्याभिवदत एवासौ लुब्धकः समायातः। तं दृष्ट्वैव हिरण्यकः पाशं छित्त्वा यथापूर्वव्याहृतविवरं प्रायात्। लघुपतनको वियत्युत्पत्यैव गतः। चित्राङ्गोऽपि वेगेनापक्रान्तः। लुब्धकोऽपि तं पाशं मृगछिन्नमिति मत्वा परं योगमचिन्तयदाह च। न दैवं विना मृगः पाशच्छेदं कृतवान्। अथ तं मन्थरकं मन्दं मन्दं स्थलमध्ये गच्छन्तं दृष्ट्वा किंचित्तुष्टः ससंभ्रममचिन्तयत्। यद्यपि मे मृगो दैववशात् पाशं छित्त्वापहृतस्तथापि मे दैवेन कच्छप उत्पादित इति। एवमवधार्य क्षुरिकया कुशानादाय दृढां रज्जुं कृत्वा चरणावाकृष्य कच्छपं सुबद्धं कृत्वा धनुष्यवलम्ब्य यथागतमेव प्रायात्। ततस्तं नीयमानं दृष्ट्वा मृगमूषकवायसाः परं विषादं गच्छन्तो रुदन्तस्तमनुजग्मुः। हिरण्यक आह।

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥ ८५ ॥
यावदस्खलितं तावत् सुखं याति समे पथि।
सकृच्च स्खलितं किंचिद्विषमं च पदे पदे ॥ ८६ ॥

कष्टं भोः ।

यदि तावत् कृतान्तेन धनेषु प्रलयः कृतः ।
मार्गश्रान्तस्य विश्रामो मित्रच्छायापि दूषिता ॥ ८७ ॥

अपरमपि मित्रं परं मन्थरकसमं न स्यात् । प्राणा अपि मित्रमूला आहुः ।

स्वभावजं तु यन्मित्रं तद्भाग्यैरेव जायते ।
तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ ८८ ॥

न मातरि न दारेषु न सोदर्ये न चात्मजे ।
विश्रामस्तादृशः पुंसां यादृङ् मित्रे निरन्तरे ॥ ८९ ॥

प्राणवृद्धिकरं मित्रं शंसन्तीह विचक्षणाः ।
इहलोकसुखं मित्रं न मित्रं पारलौकिकम् ॥ ९० ॥

तत्किं ममोपर्यनवरतमेवैतद्दैवं प्रहरति । यत आदौ तावदर्थपरिभ्रंशो दारिद्र्ययोगात् स्वजनपरिभवस्तन्निर्वेदाद् देशपरित्यागः स्निग्धसुहृद्वियोगश्चेति । इयं तावन्मम दुःखपरंपरा । अपि च

स्वकर्मसंतानविचेष्टितानि कालान्तरावर्तिशुभाशुभानि ।
इहैव दृष्टानि मया चलानि जन्मान्तराणीव दशान्तराणि ॥ ९१ ॥

कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ९२ ॥

कं न स्पृशन्ति पुरुषं व्यसनानि काले
　को वा निरन्तरसुखी य इहास्ति लोके ।
दुःखं सुखं च परिणामवशादुपैति
　नक्षत्रचक्रमिव खे परिवर्तमानम् ॥ ९३ ॥

क्षते प्रहारा निपतन्त्यभीक्ष्ण-
　मन्नक्षये कुप्यति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति
　छिद्रेष्वनर्था बहुलीभवन्ति ॥ ९४ ॥

तत्कष्टं भोः । मित्रवियोगेन हतोऽहम् । इति किं विस्मृतं निजैरपि स्वजनैः । उक्तं च

शोकारातिभयत्राणं प्रीतिविस्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ ९५ ॥

एवं बहु विलप्य हिरण्यकश्चित्राङ्गलघुपतनकावाह । अहो किं वृथाप्रलपितेन । यावदयं मन्थरकोऽस्मद्दृष्टिगोचरान्न नीयते तावदस्य मोक्षोपायश्चिन्त्यतामिति । तावूचतुः । तथा क्रियताम् । स आह । चित्राङ्गोऽस्य व्याधस्याग्रतो गत्वा जलसमीपे विप्रकृष्टे भूप्रदेशे निपत्य मृतमिवात्मानं कृत्वा दर्शयतु । अयमपि लघुपतनकस्तस्योपर्यवस्थितः शृङ्गपञ्जरान्तरविन्यस्तचरणश्चञ्च्वा विलिखन्नेवोत्पाटनरूपं छद्मनात्मानं दर्शयतु । असावपि व्याधो मूर्खो नूनं लोभान्मृगोऽयं मृत इति मत्वा कच्छपं परित्यज्य मृगार्थे सत्वरं यास्यति । तावदहमप्यपक्रान्ते तस्मिन् मन्थरकस्य बन्धनं छेत्स्यामि । ततश्छिन्नबन्धो जलाशयं सहसा प्रवेक्ष्यतीति । अन्यच्च पुनरभ्याशोपगते तस्मिँल्लुब्धकाधमे यथा पलायनं क्रियते तथा प्रयतितव्यम् । चित्राङ्गलघुपतनकाभ्यां तथैवानुष्ठिते स लुब्धक उदकतीरे मृतरूपं मृगं वायसेन भक्ष्यमाणं दृष्ट्वा हर्षितमनाः कच्छपं भूतले प्रक्षिप्य मृगान्तिकमुपाद्रवत् । अत्रान्तरे हिरण्यकेन मन्थरकस्य बन्धनं खण्डशः कृतम् । कच्छपोऽपि तत्स्थानात् सत्वरं जलाशयमनुप्रविष्टः । स मृगश्चासन्नं तं व्याधं विलोक्योत्थाय वायसेन सह प्रनष्टः । अथ लुब्धकोऽपि तदिन्द्रजालमिव मन्यमानः किमिदमित्यनुचिन्त्य प्रत्यावृत्य यावत् कच्छपस्थानं गतस्तावत् पश्यत्यङ्गुलप्रमाणां खण्डशश्छिन्नां बन्धनरज्जुं कच्छपमपि योगिनमिवादृश्यतां गतम् । इति स्वशरीरेऽपि संशयमचिन्तयत् संक्षुभितहृदयश्च तस्माद्वनाद्दिशोऽवलोकयञ्शीघ्रतरपदैर्निराशः स्वगृहमेव गतः । अथ चत्वारोऽपि ते सर्वे विमुक्तापदः कल्यशरीराः पुनरेकस्थीभूय स्वस्थानं गत्वा परस्परं स्नेहेन वर्तमानाः कालेन यथासुखमास्थिताः । तस्मात्

तिरश्चामपि यत्रेदृक् संगतं लोकसंमतम् ।
मर्त्येषु यदि कस्तत्र विस्मयो ज्ञानशालिषु ॥ ९६ ॥

**इति मित्रप्राप्तिर्नाम द्वितीयं तन्त्रं समाप्तम् ।**

---

## अथ संधिविग्रहं काकोलूकीयं नाम तृतीयं तन्त्रम् ।

अथेदमारभ्यते संधिविग्रहसंबन्धं काकोलूकीयं नाम तृतीयं तन्त्रम् । यस्यायमाद्यः श्लोकः ।

न विश्वसेत् पूर्वविरोधितस्य शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धां गुहां पश्यत घूकपूर्णां काकप्रणीतेन हुताशनेन ॥ १ ॥

राजकुमारा ऊचुः । कथं चैतत् । विष्णुशर्माह ।

अस्ति कस्मिंश्चिद्वनोद्देशे महान्न्यग्रोधवृक्षः स्निग्धबहलपर्णगुल्मच्छायया स्वागतमिवाध्वगानां प्रयच्छति । तत्र मेघवर्णो नाम वायसराजः प्रतिवसति स्म काकसहस्रपरिवारः । तत्र नातिदूर उलूकसहस्रपरिवारोऽरिमर्दनो नामोलूकराजश्च प्रतिवसति स्म । स चैकदा सहजवैरानुशयादुलूकोपलब्धदुर्गवृत्तान्तः कालबलशक्त्या रात्रावागत्य महतोलूकसंघातेन तस्योपरि संनिपतितः । महच्च तेषां काकानां कदनं कृत्वाऽपयातः । अन्येद्युश्च प्रभातसमये हतशेषान् भग्नचञ्चुपक्षचरणानन्यांश्च समेत्य शिबिरानुसारप्रविचयोपलब्धिं कृत्वा मन्त्रिभिः सार्धं मेघवर्णो मन्त्रयितुमारब्धः । प्रत्यक्षमेतन् महद्विशसनमस्माकं सपत्नेनारिमर्दनेन कृतम् । दृष्टदुर्गमार्गोऽसाववश्यमद्य रात्रौ लब्धावसरोऽस्मदभावाय पुनरेष्यति । तदहीनकालमुपायश्चिन्त्यतां तद्विघातो यथा भवति । इति । एवमुक्त्वैकान्तीभूतः । अथ तस्यान्वयपरंपरागताः पञ्च सचिवास्तिष्ठन्ति । तद्यथा । उड्डीवी संडीव्याडीवी प्रडीवी चिरंजीवी चेति । तान् प्रत्येकं प्रष्टुमारब्धः । तेषामादावुड्डीविनं पृष्टवान् । भद्र, एवमवस्थिते किमनन्तरं करणीयं मन्यसे । सोऽब्रवीत् । किं मयाऽभ्यधिकं किंचिज्ज्ञायते । देव यदेव शास्त्रेऽभिहितं तदेव वक्ष्यामि । किं तु बलवता विगृहीतस्य तदनुप्रवेशो विदेशगमनं वा इति । तच्छ्रुत्वा संडीविनमाह । भद्र भवान् कथं मन्यत इति । स आह । देव यदेवानेनाभिहितं बलवता विगृहीतस्य विदेशगमनमिति तन्नाकस्मादेकपद एव दुर्गपरित्यागः कार्यः । यतो युक्तमेवं स्थिते दोलाव्याजेन कालं यापयितुम् । यदा भयं भविष्यति तदा-

पयानं करिष्यामः । यदा स्वास्थ्यं तदा दुर्ग एव स्थास्याम इति । ततस्तस्यापि वचनमवधार्य प्रडीविनं पृष्टवान् । भवतोऽत्र कोऽभिप्रायः । सोऽब्रवीत् । राजन् आत्ययिकमिदमनवरतं गतागतकरणम् । दीनान्धकुब्जवामनकुणिखञ्जव्याधितोपस्करादिभिर्नयनानयनैरेव वयं विनष्टाः । यत एवं गते संधिरेव श्रेयस्कर इति । यत्कारणम्

प्रवृद्धचक्रेणाक्रान्तो राज्ञा बलवतावलः ।
संधिनोपक्रमेत् तूर्णं कोशदण्डात्मभूतये ॥ २ ॥

यतस्तेषां संनतिं कृत्वा सुखमनुद्विग्ना इहैव स्थास्याम इति । तस्यापि वचनमवधार्योडीविनं पृष्टवान् । भद्र, एवमवस्थितेऽस्माकं किं प्राप्तकालं मन्यसे । स आह । वरमरण्ये हरिणरोमन्थकषायाण्यम्भांस्यासेवितानि न च प्रभुत्वरसास्वादिनः परोपस्थाने कृपणजीवितमिति । अपि च

ज्यायान्न नमेदसमेऽसमोपनमनं महत्कष्टम् ।
गर्हितमेतत् पुंसामतिनमनं साहसधनानाम् ॥ ३ ॥

अपि च

दण्डानामिव नमतां पुंसां छाया विवृद्धिमुपयाति ।
क्षयमेति चातिनमतां तस्मात् प्रणमेन्न चातिनमेत् ॥ ४ ॥

तैश्च सहास्माकं संदर्शनमेव न विद्यते । संदर्शनेन विना कथं संधिर्भविष्यति । तत्सर्वथा युद्धमेव नस्तैः सह पुष्कलमिति । ततो मेघवर्णस्तेषां चतुर्णामपि पृथक् पृथगभिप्रायं ज्ञात्वा चिरंजीविनमाह । तात त्वमस्माकं चिरन्तनोऽन्वयागतः सचिवोऽजस्रं च हितान्वेषी । किमेवमवस्थितेऽप्यधुना प्राप्तकालं मन्यसे । यच्च त्वं ब्रूषे तदेव नः श्रेयस्करमिति । एवमुक्ते चिरंजीव्याह । देव किमेभिर्नोक्तमस्ति यत्र मम वचनावकाशः स्यात् । इह हि संधिविग्रहयोः संधिर्वा विग्रहो वा तौ पूर्वोक्तावेव । तथापि यदाडीविनाभिहितं तत् पक्षव्यावर्तनायोच्यते । भद्र कथमेषामस्माकं च युद्धं सामान्यम् । तावदसाधारणं युद्धमस्माकम् । सर्वथा ते बलवन्तः । ततस्तैः सह न युद्धमस्माकमुचितम् । तथा च

परेषामात्मनश्चैव योऽविचार्य बलाबलम् ।
कार्यायोत्तिष्ठते मोहाद्व्यापदः स समीहते ॥ ५ ॥

लघुष्वपि विधातव्यं गौरवं परिपन्थिषु ।
कृत्यन्तरविधातॄणां भवन्ति ह्यफलाः क्रियाः ॥ ६ ॥
क्षमावन्तमरिं प्राज्ञं काले विक्रमसेविनम् ।
परात्मगुणदोषज्ञमनुस्मृत्य न विश्वसेत् ॥ ७ ॥
यमेवाभ्युपयाति श्रीरुपायपरितोषिता ।
निरुद्विग्ना हि तत्रास्ते न करग्रहदूषिता ॥ ८ ॥
शातयत्येव तेजांसि दूरस्थोऽप्युन्नतो रिपुः ।
सायुधोऽपि निकृष्टात्मा किमासन्नः करिष्यति ॥ ९ ॥
न भीतो न परामृष्टो नापयातो न वर्जितः ।
नाशक्तोऽप्यवमन्तव्यो नैको वेति नयाधिकैः ॥ १० ॥
यस्य सिध्यत्ययत्नेन शत्रुः स विजयी नरः ।
य एकतरतां गत्वा जयी विजित एव सः ॥ ११ ॥
सिद्धिं वञ्चनया वेत्ति परस्परवधेन वा ।
निरुपायं सुखं स्वान्तं द्वयोः किमिति चिन्त्यताम् ॥ १२ ॥
मदावलिप्तैः पिशुनैर्लुब्धैः कामात्मकैः शठैः ।
दर्पोद्धतैः क्रोधपरैर्दण्डनीतिः सुदुर्ग्रहा ॥ १३ ॥
इयं त्वभिन्नमर्यादैः स्वनुशिष्टैः कृतात्मभिः ।
सर्वंसहैरुपायज्ञैरमूढैरेव धार्यते ॥ १४ ॥

तत्सर्वथा युद्धमेव न श्रेयस्करमिति । कस्मात् । ज्यायसा विरोधो हस्तिना पादयुद्धमिवैकान्तविनाशाय । मेघवर्ण आह । तात कथय किं निष्पन्नम् । सोऽब्रवीत् । भद्र संप्रधार्यतामेतत् । उक्तं च

या हि प्राणपरित्यागमूल्येनापि न लभ्यते ।
सा श्रीर्मन्त्रविदां वेश्मन्यनाहूतापि धावति ॥ १५ ॥
क्रमेण यः शास्त्रविदो हितैषिणः
क्रियाविभागे सुहृदो न पृच्छति........॥ १६ ॥
देशं बलं कार्यमुपायमायुः
संचिन्त्य यः प्रारभते स्वकृत्यम् ।

महोदधिं नद्य इवाभिपूर्णं
तं संपदः सत्पुरुषं भजन्ते ॥ १७ ॥
शूराः सर्वोपधाशुद्धा बुद्धिमन्तो विचक्षणाः ।
सहायाः स्युर्नृपत्वं हि सत्सहायनिबन्धनम् ॥ १८ ॥
विषाणसंघट्टसमुत्थितानल-
स्फुलिङ्गमालाकुलितेऽपि दन्तिनाम् ।
रणेऽपि पीत्वा तु यशांसि विद्विषां
भवत्यविद्वान्न हि भाजनं श्रियः ॥ १९ ॥

तत्सर्वथा गुणवत्सहायपरिग्रहो विजिगीषूणामेकान्तसिद्धये । उक्तं च

न वंशमार्गक्रमलक्षणं गुणं
निरीक्षते नैव वपुर्न चागमम् ।
य एव शूरः सुसहायवान्नर-
स्तमेव लक्ष्मीश्चपलापि सेवते ॥ २० ॥
गुणेष्वाधारभूतेषु फले कस्यास्ति संशयः ।
न्यस्तश्चात्मा सतां वृत्ते विभूतिश्च न दुर्लभा ॥ २१ ॥
अपि कीर्त्यर्थमायान्ति नाशं सद्योऽतिमानिनः ।
न चेच्छन्त्ययशोमिश्रमप्येवानन्त्यमायुषः ॥ २२ ॥
जयायोत्क्षिप्यतां पादो दक्षिणः किं विचार्यते ।
मूलं हि प्राहुराचार्या दीर्घसूत्रत्वमापदाम् ॥ २३ ॥
श्रुतापविद्धैरेतैर्वा वृथा किं शुकभाषितैः ।
प्राज्ञस्त्वं त्यज्यतां मौनं यस्य वेला तदुच्यताम् ॥ २४ ॥
मन्त्रमूलं हि विजयं प्रवदन्ति मनीषिणः ।
मन्त्रस्य पुनरात्मा च बुद्धिश्चायतनं परम् ॥ २५ ॥
षडेव खलु मन्त्रस्य द्वाराणि तु नराधिप ।
विदितान्येव ते तात कीर्तयिष्यामि कीर्तिमन् ॥ २६ ॥
आत्मानं मन्त्रिदूतं च छन्नं त्रिषवणक्रमम् ।
आकारं ब्रुवते षष्ठमेतावान् मन्त्रनिश्चयः ॥ २७ ॥

असंगृहीतस्य पुनर्मन्त्रस्य शृणु यत्फलम् ।
अहीनं धर्मकामाभ्यामर्थं प्राप्नोति केवलम् ॥ २८ ॥
अथ व्यवसितानुज्ञा छेदनं संशयस्य च ।
आनिशं तस्य च ज्ञानं मन्त्रिणां त्रिविधं फलम् ॥ २९ ॥

तद्यथा यो मन्त्रो विस्रम्भणं गच्छति तथा प्रयतितव्यम् । यत्कारणम्

मिथ्या प्रणिहितो मन्त्रः प्रयोक्तारमसंशयम् ।
दुरिष्ट इव वेतालो नानिहत्योपशाम्यति ॥ ३० ॥
आत्मपक्षक्षयायैव परपक्षोदयाय च ।
मन्त्रद्वैधममात्यानां तन्न स्यादिह भूतये ॥ ३१ ॥
आयव्ययौ यस्य च संविभक्तौ
छन्नश्च चारो निभृतश्च मन्त्रः ।
न चाप्रियं मन्त्रिषु यो ब्रवीति
स सागरान्तां पृथिवीं प्रशास्ति ॥ ३२ ॥

तदेवं पुनर्ब्रवीमि । युद्धं न श्रेय इति । संधिरप्यशक्योऽर्थः सहजवैरानुबन्धानाम् । तद्यदि मयावश्यं मन्त्रयितव्यं तदपनीयन्तामेते मन्त्रिमात्रव्यपदेशकेवलोपजीविनः कथाकुशलाः । न च करणीयेष्वात्ययिकेषु षट्कर्णं रहस्यं फलवद्भवति । तथा चानुष्ठिते मेघवर्ण आह । तात बालभावादनभिज्ञोऽसि । यथा ब्रवीषि तथा करोमि । त्वदायत्तं हि सर्वमिदम् । त्वमधुनार्थवादी ज्ञानविज्ञानसंपन्नः पितृक्रमेण हितैषी । किं तु कौतूहलमुच्यताम् । कथं पुनरस्माकमुलूकैः सह वैरमुत्पन्नमिति । सोऽब्रवीत् । भद्र वाग्दोषात् ।

सुचिरं हि चरन्नित्यं ग्रीष्मे सस्यमबुद्धिमान् ।
द्वीपिचर्मप्रतिच्छन्नो वाग्दोषाद्रासभो हतः ॥ ३३ ॥

सोऽब्रवीत् । कथं चैतत् । चिरंजीव्याह ।

## अथ द्वीपिचर्मप्रतिच्छन्नरासभकथा नाम प्रथमा कथा ।

अस्ति कस्यचिद्रजकस्य वस्त्रनयनातिभारपीडया गर्दभोऽवसन्नः । रजकेन चासौ पोषणबुद्धिना द्वीपिचर्मणा परिच्छाद्य रात्रौ परसस्येषु मुक्तः । स च यथेष्टं

सस्यभक्षणं करोति । न कश्चिद् द्वीपिबुद्धया तदन्तिकमुपेत्य सस्येभ्यो निवारयति । अथ कदाचित् केनापि कार्षिकेण सस्यरक्षकेण स दृष्टः । द्वीप्ययं नष्टोऽस्मीति मत्वा कुब्जीभूय धूसरकम्बलावेष्टिततनुरुद्यतधनुष्पाणिः शनैः शनैरपक्रमितुमारब्धः । तं च दूरे दृष्ट्वा गर्दभः पुष्टाङ्गो जातबलो गर्दभीयमिति मत्वा निष्कृष्टायुः परं वेगमास्थायोपसर्पितुमारब्धः । असावपि शीघ्रतरवेगो धावति । गर्दभश्चैवमचिन्तयत् । कदाचिदियं द्वीपिचर्मव्यवस्थितशरीरं मां दृष्ट्वान्यथैवावगच्छेत् । अतोऽहमस्याः स्वां प्रकृतिमास्थाय वाशितेन मनोह्लादनं करिष्यामि । इति वाशितुमारब्धः । तच्च श्रुत्वा सस्यरक्षकेण शब्दाद्गर्दभोऽयमिति मत्वा प्रतिनिवृत्यासाविषुणा व्यापादितः ।

इति प्रथमा कथा समाप्ता ॥

अतोऽहं ब्रवीमि । सुचिरं हि चरन्नित्यमिति । एवमस्माकमपि वाग्दोषादुलूकैः सह वैरमुत्पन्नमिति । मेघवर्ण आह । कथमेतत् । सोऽकथयत् ।

## अथ पक्षिराजनियोजनकथा नाम द्वितीया कथा ।

अस्त्यराजके सर्वपक्षिणां संभूय चित्तमुत्पन्नम् । कतमं राजानं पक्षिणामभिषिञ्चाम इति । ततस्तेषां मतमुत्पन्नम् । उलूकोऽभिषिच्यतामिति । तस्य यथाविधि सर्वाभिषेकोचितद्रव्यसंभारं कृत्वा छत्रचामरव्यजनसिंहासनभद्रपीठक्षौमवासोनन्द्यावर्तादिनाभिषेकः प्रारब्धः । अथ नभसा व्रजन् काकः समायातः । ते तु तं दृष्ट्वा स्तम्भिताभिषेकाः । अवश्यमयमपि समुदायेऽभ्यन्तरीकर्तव्यः । यत्कारणं महदिदं पार्थिवं राजकार्यम् । पृष्टश्चासावागतः । भद्र किं तवाप्येतदभिरुचितं प्रजापालत्वं दिवान्धस्येति । अथासावाह । किमन्ये पक्षिण उत्सादं गता हंसकारण्डचक्रवाकक्रौञ्चमयूरकोकिलहारीतजीवजीवकादयो येनायमप्रसन्नदृष्टिरुलूको राज्येऽभिषिच्यते । अपि च

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनम् ।
अक्रुद्धस्य मुखं पापं क्रुद्धः किं नु करिष्यति ॥ ३४ ॥
स्वभावरौद्रमत्युग्रं क्षुद्रमप्रियवादिनम् ।
उलूकमभिषिच्येमं कथं रक्षा भविष्यति ॥ ३५ ॥

सोऽयं दृष्टदिग्दाहं करोत्यव्यपदेशक्षमश्च । उक्तं च

व्यपदेशेऽपि सिद्धिः स्यादशक्तश्च नराधिपः ।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम् ॥ ३६ ॥

पक्षिण ऊचुः । कथं चैतत् । काक आह ।

## अथ हस्तिशशकेन्दुकथा नाम तृतीया कथा ।

अस्ति कदाचिद् द्वादशवार्षिक्यनावृष्टिरापतिता । तया च तडागह्रदपल्वलसरांसि शोषमुपागतानि । सर्वसत्त्वानां तृष्णार्तानां महद्व्यसनमुत्पन्नं विशेषेण तु दन्तिनाम् । अथ चतुर्दन्तो नाम हस्तिराजः । सोऽन्यैर्गजैर्विज्ञापितः । देव । पिपासाकुलाः कलभाः केचिन् मृतावस्थाः सन्ति । मृताश्चापरे । तच्चिन्त्यतां कश्चित् पिपासापनयनायोपायः । ततो यूथपतिनाष्टास्वपि दिक्षु वेगवन्तो धावन्त उदकान्वेषणाय प्रेषिताः । तत्र चैकेनागत्य कथितम् । देव नातिदूरे विमलजलसंपूर्णं व्योमैकदेशमिव महच्चन्द्रसरो नाम सरस्तिष्ठति । हस्तिराजश्च तथैव सर्वान् गृहीत्वा सत्वरं सहर्षं प्राप्तस्तत् सरः । अवतरद्भिश्च तैः समन्तादसुखावतारे तस्मिन् सरस्तीरे पूर्वकृतावासाः शशकाः संपिष्टशिरोग्रीवा बहवः कृताः । अथ पीत्वावगाह्य गते तस्मिन् गजयूथे हतशेषाः शशकाः संप्रधारयितुमारब्धाः । अथ शिलीमुखो नाम शशकराज आह । अधुना किं करणीयम् । विनष्टमस्मत्कुलम् । दृष्टमार्गैरेभिः पुनरिहावश्यमागन्तव्यम् । तद्यावदेत इह नागच्छन्ति तावदुपायश्चिन्त्यतामिति । अथ तत्र बहुवृत्तान्तदर्शी विजयो नाम शशकस्तानाह । शक्यमेतत् । न पुनर्यथेहागमिष्यन्ति त इयं मे प्रतिज्ञा । किं तु मम कर्मसाक्षिणः केवलं प्रसादः क्रियताम् । इति । तच्छ्रुत्वा शिलीमुखः सहर्षमिदमाह । भद्र, अवश्यमेतदेव । यत्कारणम्

नीतिशास्त्रार्थतत्त्वज्ञो देशकालविभागवित् ।
विजयः प्रेष्यते यत्र तत्र सिद्धिरनुत्तमा ॥ ३७ ॥
हितवक्ता मितवक्ता संस्कृतवक्ता न चापि बहुवक्ता ।
अर्थान् विमृश्य वक्ता स हि वक्ता सर्वकार्यकरः ॥ ३८ ॥

भवतो बुद्धिप्रागल्भ्यमुपलभ्य मम दूरस्थस्यापि शक्तिरियं हस्तिनो ज्ञास्यन्ति । यतः

दूतं वा लेखं वा दृष्ट्वाहं नरपतेरदृष्टस्य ।
जानामि तं नरेन्द्रं प्राज्ञं प्रज्ञाविहीनं वा ॥ ३९ ॥
दूत एव हि संदध्याद् दूतो भिन्द्याच्च संहतान् ।
दूतस्तत् कुरुते कर्म सिध्यन्ति येन मानवाः ॥ ४० ॥

त्वयि च गते स्वयमेवाहं गत इव । इति । यत्कारणम्

ब्रूया अनुगतं युक्तं मन्यसे यच्च साध्विति ।
ब्रूया अनुमतं सर्वमस्मद्वचनमेव तत् ॥ ४१ ॥
अयं दूतार्थसंक्षेपः प्रत्यर्थनियता गिरः ।
प्रयोजनं क्रियोत्पादि कियच्छक्येत भाषितुम् ॥ ४२ ॥

इति शशराजमामन्त्र्य विजयशशो हस्तिराजसमीपं प्रायात् । गत्वा च द्विरदपतिं दृष्ट्वा चिन्तयामास । अशक्योऽनेन सहास्मद्विधानामल्पकायानां संगमः। यदाहुः

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः ।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ ४३ ॥

अतोऽहं पर्वतशिखरमारुह्य हस्तिराजमभिवादयामीति । तथैवानुष्ठीयाब्रवीत् । भो अपि भवतः सुखम् । तच्च श्रुत्वा वीक्ष्य हस्तिराजः शशकमाह । कस्त्वं कुतो भवान् । स आह । दूतोऽहं भगवता चन्द्रेण प्रेषितः । यूथपतिराह । कार्यमुच्यताम् । शशक आह । जानात्येव भवान्यथार्थवादिनो दूतस्य न दोषः करणीयः । दूतमुखा हि राजानः सर्व एव । उक्तं च

उद्धृतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ।
ते वै यथोक्तवक्तारो न वध्याः पृथिवीभुजा ॥ ४४ ॥

सोऽहं चन्द्राज्ञया ब्रवीमि । कथं नामात्मानं परं चैवापरिच्छिद्य भवान् परापकारे प्रवर्तते । उक्तं च

परेषामात्मनश्चैव योऽविचार्य बलाबलम् ।
कार्यायोत्तिष्ठते मोहादापदः स समीहते ॥ ४५ ॥

तत्त्वयास्मन्नामप्रसिद्धं चन्द्रसरोऽन्यायेन धर्षितम् । तत्र चास्मत्संरक्षणीयाः शशका व्यापादिताः । न चैतद्युक्तम् । ते तु मयैव भर्तव्याः । येनाहं तानुरसा धारयाम्यत एव शशाङ्क इति लोके प्रख्यातनामाऽस्मि । स त्वं यदि न

निवर्तसेऽस्माद्व्यापारात् ततोऽस्मत्तो महान्तमनर्थं प्राप्स्यसि । निवृत्तस्य महान् विशेषो भविष्यति । अस्मज्ज्योत्स्नयाप्यायितशरीरः स्याः । अन्यथास्मद्रश्मिसंनिरोधाद् घर्माभितापितशरीरः सद्यः सपरिवारो विनाशमेष्यसीति । एवमुक्तवति दूते हस्तिराजोऽतीवभयक्षुभितहृदयस्तमाह । भद्र सत्यं मयाज्ञानादपकृतं सोऽहमधुना शशिना सह विरोधं न करिष्यामीति । स आह । स राजात्र सरस्येव तिष्ठति । तदागच्छतु भवानेकाकी यावदहं तं दर्शयामि । भगवन्तं प्रणम्य प्रसाद्य च गच्छ । इत्युक्त्वा तं गजं रात्रौ चन्द्रसरो नीत्वा संपूर्णकलामण्डलमुदकगतं चन्द्रप्रतिबिम्बमदर्शयत् । असावपि हस्तिराजो देवताप्रणामं परमशुचिर्भूत्वा करोमीति मत्वा द्विमनुष्यबाहुग्राह्यप्रमाणं करमम्भसि प्रक्षिप्तवान् । अथ संक्षुभितोदकचलन्मण्डल इतश्चेतश्च चक्रारूढ इव बभ्राम । तेन गजश्चन्द्रसहस्रमपश्यत् । अथाविग्नहृदय इव प्रतिनिवृत्य विजयोऽब्रवीत् । कष्टं कष्टं द्विगुणतरमाकोपितस्त्वया चन्द्रमाः । स आह । केन हेतुना भगवांश्चन्द्रो मयि प्रकुपितः । विजयोऽब्रवीत् । स्पर्शनादस्य पानीयस्य । अथ तच्छ्रुत्वा संलीनवालधिराकृष्य करं निकृष्टजानुरवनितलविन्यस्तशिराः प्रणम्य भगवन्तं चन्द्रमसं हस्त्यवोचत् । देव । इदमज्ञानात्कृतं क्षम्यताम् । न चाहं पुनरिहागमिष्यामि । इत्युक्त्वानवलोकयन्नेवापुनरागमनाय यथागतं प्रायात् ।

## इति तृतीया कथा समाप्ता ।

अतोऽहं ब्रवीमि । व्यपदेशेऽपि सिद्धिः स्यादिति । अपि च क्षुद्रोऽयमुलूको दुरात्मा न शक्तः प्रजाः पालयितुम् । उक्तं च

क्षुद्रमर्थपतिं प्राप्य कुतो विवदतोः सुखम् ।
उभावपि क्षयं यातौ यथा शशकपिञ्जलौ ॥ ४६ ॥

विहगा ऊचुः । कथं चैतत् । सोऽब्रवीत् ।

## अथ मार्जारकपिञ्जलशशककथा नाम चतुर्थी कथा ।

अस्ति । अहं पुरा कस्मिंश्चिद् वृक्षे न्यवसम् । तत्रैवाधस्तात् कोटरे कपि-

ञ्जलो नाम पक्षी प्रतिवसति स्म । तत आवयोः परस्परमेव संवासगुणादभेद्या प्रीतिरुत्पन्ना प्रतिदिवसं च कृताहारविहारयोः प्रथमप्रदोषकाले सुभाषितप्रश्न-प्रति प्रश्नैः कालोऽतिवर्तते। अथ कदाचिदालापवेलायां सायंतनसमयेऽपि कपि-ञ्जलो नायाति । यतो मम हृद्रतातीवाकुलता समुत्पन्नैवं चाचिन्तयम्। किमसौ विनष्टो बद्धो वाथवान्यावास एतस्य प्रीतिरुत्पन्ना येन नायातीति मम चिन्त-यतो बहूनि दिनानि व्यतिक्रान्तानि । अनन्तरं च तस्यावासकोटरं दीर्घकर्णो नाम शशक आगत्य प्रविष्टः । तं च दृष्ट्वाहमाचिन्तयम्। स एव मे सुहृन्नास्ति किं ममावासव्यापारेण । स तत्र कियत्कालं यावदतिष्ठत् तावत् कपिञ्जलोऽत्रैव समायातः । अथासौ कोटरगतं शशकं दृष्ट्वाह । भो मदीयमिदं स्थानं तच्छी-घ्रमपगम्यतामितः । स तमाह । मूर्ख किं न ते विदितमुपस्थानभोग्य आवासो भुक्तिश्च । कपिञ्जल आह । सन्त्यत्र प्राश्निकाः पृच्छामो देशरूपमिति । उक्तं च धर्मशास्त्रे ।

वापीकूपतडागानां गृहस्यावसथस्य च ।
सामन्तप्रत्यया सिद्धिरित्येवं मनुरब्रवीत् ॥ ४७॥

तथा नामेति प्रतिपद्य प्रस्थितौ व्यवहारकारणाय । अहमपि कौतुकात् तयोरेव पृष्ठतोऽनुगतः । पश्यामि किमत्र भविष्यतीति । ततो नातिदूरं गत्वा कपिञ्जलः शशकमाह । कः पुनरावयोर्व्यवहारं द्रक्ष्यति । शशक आह । नन्व-यं नदीपुलिनगतो दधिकर्णो नाम वृद्धमार्जारस्तपःसंश्रितः सत्त्वजातानुकम्पो धर्मशास्त्रविद् वसति । सोऽस्माकं न्यायदर्शी भविष्यति । तच्च श्रुत्वा कपि-ञ्जलोऽब्रवीत् । अलमनेन क्षुद्रेण । उक्तं च ।

न हि विश्वसनीयः स्यात् तपस्विच्छद्मना स्थितः ।
दृश्यन्ते बहवस्तीर्थे गलदन्तास्तपस्विनः ॥ ४८ ॥

तच्च श्रुत्वा सुखोपायप्रवृत्तिप्रसाधनछद्मरूपी दधिकर्णो मार्जारस्तद्वि-श्वासनार्थं सुतरामादित्याभिमुखो द्विपादः स्थित ऊर्ध्वबाहुर्निमीलितैकनयनो जप-न्नासीत् । जपतश्च तस्य विश्वस्तहृदयावुपश्लिष्टौ स्थानव्यवहारश्रावणमकुरु-ताम् । भोस्तपस्विन् धर्मदेशक । आवयोर्विवादो वर्तते तद्धर्मशास्त्रद्वारेणा-स्माकं निर्णयं देहि । तेन चाभिहितम् वृद्धत्वाद्धतेन्द्रियत्वाच्च दुरान्न सम्यक्

शृणोम्यहम् । संनिकृष्टं भूत्वोच्चैः श्रावयतम् । ततस्तौ निकटीभूय कथयतः । ततस्तत्संनिधानार्थं विश्वाससुपपादयता दधिकर्णेन धर्मशास्त्रं पठितम् ।

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतो वधीत् ॥ ४९ ॥
एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥ ५० ॥
अन्धे तमसि मज्जामः पशुभिर्ये यजामहे ।
अहिंसायाः परो धर्मो न भूतो न भविष्यति ॥ ५१ ॥
मातृवत् परदारांस्तु परद्रव्याणि लोष्टवत् ।
आत्मवत् सर्वभूतानि यः पश्यति स पश्यति ॥ ५२ ॥

तत्किं बहुना तथा तौ छद्मना विश्वासमानीतौ येनाङ्कमुपगतावुभावप्येकदैव तेन क्षुद्रेण गृहीतौ हतौ चेति ।

## इति चतुर्थी कथा समाप्ता ।

अतोऽहं ब्रवीमि । क्षुद्रमर्थपतिं प्राप्येति । तत्सर्वथा नायं क्षुद्रो राज्ययोग्य उलूक इति । तस्य तु तद्वचनं श्रुत्वा साध्वनेनाभिहितमिति मत्वाब्रुवन् । पुनरेव समवायं कृत्वा महद्राजकार्यं संप्रधारयिष्यामः । इत्युक्त्वा यथागतं सर्वपक्षिणो विचेरुः । केवलस्त्ववशिष्टो भद्रपीठगतोऽभिषेकाभिमुखो दिवान्धः केन चेदमनर्थायाभिहितं मम वायसेनेत्युपलब्धवार्त्त उलूको वायसवचनेनादीपितमनास्तमाह । किं मयापकृतं भवतो येनाभिषेकव्याघातः कृत इति ।

संरोहतीषुणा विद्धं वनं परशुना हतम् ।
दग्धं दावानलेनापि न प्ररोहति वाक्क्षतम् ॥ ५३ ॥

तत्किं बहुनाद्यदिवसादारभ्यास्माकं भवतां च वैरम् । इति चाभिधाय दिवान्धः क्रुधा यथागतं प्रायात् । असावपि वायसो भयव्याकुलश्चिन्तयामास । किमिदमनर्थं मया सामान्येऽर्थे कृतमिति । साध्वभिहितम् ।

अदेशकालार्थमनायतिक्षमं
यदप्रियं लाघवकारि चात्मनः ।

योो भाषते कारणवर्जितं वचो
न तद्वचः स्याद् विषमेव तद्भवेत् ॥ ५४ ॥
बलोपपन्नोऽपि हि बुद्धिमान्नरः
परं नयेन्न स्वयमेव वैरिताम् ।
भिषङ् ममास्तीति विचिन्त्य भक्षये-
दकारणं को हि विचक्षणो विषम् ॥ ५५ ॥

तदिदमापतितं ममाज्ञानादिति । यच्च हितैषिभिः सार्धमसंप्रधार्य क्रियते तस्ये-दृश एव विपाको भवति । उक्तं च

सुहृद्भिराप्तैरसकृत्परीक्षितं
स्वयं च भूयः परिचिन्तिताश्रयम् ।
करोति कार्यं खलु यः स बुद्धिमान्
स एव लक्ष्म्या यशसश्च भाजनम् ॥ ५६ ॥

इति । एवमुक्त्वा काकोऽपि ततः स्थानात् प्रायात् ।

## इति द्वितिया कथा समाप्ता ।

तदेवं देव वाक्कृतादस्माकमुलूकैः सह वैरमिति । मेघवर्ण आह । अ-वगतं मयेदम् । तात संप्रधार्याधुना यावत्तेऽस्मान् प्रति संनिपाताय नेहाग-च्छन्ति तावदुपायश्चिन्त्यताम् । असावाह । स्वामिन् संधिविग्रहासनयानसं-श्रयद्वैधीभावानां षण्णां गुणानां संधिविग्रहावादौ व्याख्यातौ । अधुना त्वास-नयानसंश्रयद्वैधीभावानामस्माकमभाव एव । यत्कारणम् । आसनं बलयि-सि द्विषति स्थानस्यात्मनश्च विनाशाय भवति । यानं तावत्स्थानपरित्यागाय । कं बलवन्तं संश्रयामः कस्य द्वैधीभावः । तदेवं गते सामदानभेददण्डानां चतुर्णा-नयानां नास्त्यवकाशः । अस्ति पञ्चमोऽप्यशास्त्रकर्तुर्नयश्छलो नाम । तमङ्गी-कृत्य तमेवाहं तद्विजयाय परिभवाय च प्रयतिष्ये । उक्तं च

बहवोऽबलवन्तश्च कृतवैराश्च शत्रवः ।
शक्ता वञ्चयितुं बुद्ध्या ब्राह्मणं छागलादिव ॥ ५७ ॥

सोऽब्रवीत् । कथं चैतत् । चिरंजीव्याह ।

## अथ ब्राह्मणधूर्तकथा नाम पञ्चमी कथा ।

अस्ति कश्चिद् ब्राह्मणो ग्रामान्तरात् पशुबन्धननिमित्तं छागमादाय स्कन्धे कृत्वा स्ववेश्मनि गच्छन् पथि धूर्तैर्दृष्टः। तैश्चिन्तितम् । ब्राह्मणोऽयं छागं त्याज्यतामिति । ततस्तस्यैवाग्रतः कृतसंकल्पैर्मार्गाभिमुख्येनागच्छद्भिरेकद्वित्रिप्रविभागेन स्थितम् । यस्तु तेषामग्रगस्तेन ब्राह्मणोऽभिहितः । किमित्ययं कुक्कुरस्त्वया स्कन्धेनोह्यते । अथवा श्वापदव्यापादने कुशल इति । एवमुक्त्वापक्रान्तः । ब्राह्मणश्चिन्तयामास । किमनेन दुरात्मनाभिहितम् । कथमहं श्वानं स्कन्धे करिष्यामि । यावदन्यौ द्वौ धूर्तौ ताभ्यामपि ब्राह्मणोऽभिहितः । ब्रह्मन् किमिदमसदृशं व्यवसितं यज्ञोपवीतमक्षमाला कमण्डलुस्त्रिपुण्ड्रकं स्कन्धे च श्वा विधुरम् । अथवा शशमृगसूकरव्यापादने नूनमयं कुशल इति । एवमुक्त्वा तावतिक्रान्तौ । ब्राह्मणस्तु जिज्ञासया छागं भूमौ निधाय सुनिपुणं कर्णशृङ्गवृषणपुच्छादीनवयवान् परामृश्याचिन्तयत् । मूर्खास्ते कथमिमं श्वानमिवावधारयन्ति। पुनः स्कन्धेनादाय प्रायात्।अथान्यैस्त्रिभिरभिहितो ब्राह्मणः। न त्वया स्प्रष्टव्या वयमित्येकपार्श्वेन गम्यतां यत्कारणं शुचिरसि लिङ्गमात्रेण ब्राह्मण श्वसंपर्कान्नूनं व्याधो भविष्यसि । इत्युक्त्वापक्रान्ताः । अथासौ ब्राह्मणश्चिन्तयामास । कथं ममेन्द्रियाणि विकलानि । अथवा यतो बहुत्वं तत्प्रमाणम् । दृश्यन्ते च लोके विपरीतानि । कदाचिदयं श्वरूपी राक्षसः स्यात् । किमस्य शक्यं श्वरूपं कर्तुमिति । एवं संप्रधार्य छागं त्यक्त्वा स्नात्वा गृहं ययौ। धूर्तैश्च स छागो गृहीत्वा भक्षितः ।

### इति पञ्चमी कथा समाप्ता ।

अतोऽहं ब्रवीमि । बहवोऽबलवन्तश्चेति । तदेव । अस्ति मे किंचिद्वक्तव्यम् । तच्चावधार्य यथोक्तमनुष्ठेयम् । सोऽब्रवीत् । तात । अथ किम् । चिरंजीव्याह । देव मां लुञ्चितपक्षं कृत्वातिनिष्ठुरवचनैर्निर्भर्त्स्य पूर्वहतानामाहृतरुधिरेणालिप्यास्यैव न्यग्रोधपादपस्याधस्तात् प्रक्षिप्यर्ष्यमूकपर्वते गम्यताम् । तत्र सपरिवारस्तिष्ठ । यावदहं तान् सपत्नान् शास्त्रप्रणीतेन विधिना दक्षिणाशामुखान् कृत्वा कृतार्थः पुनस्त्वत्सकाशमागच्छामि । न च त्वया

मां प्रति कृपा कार्या । तथा चानुष्ठितेऽस्तं गते सवितर्यसावरिमर्दनः स्वसैन्य-परिवारस्तमेव न्यग्रोधमधिरूढः । न च तत्र कंचिदपि वायसमपश्यत् । शिख-राग्रतश्चाचिन्तयत् । क्व ते शत्रवो गता इति । अथ चिरंजीवी क्षितितलगतस्तै-रदृष्ट एवं चिन्तयामास । यद्येते शत्रवोऽनुपलब्धवृत्तान्ता एवापयान्ति ततो मया किं कृतं भवति । उक्तं च

अनारम्भस्तु कार्याणां प्रथमं बुद्धिलक्षणम् ।
आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ ५८ ॥

तद्वरमनारम्भो न त्वारब्धविनाशः कृतः । यतोऽहमेषां स्वशब्दश्रावणादात्मानं दर्शयामीति । एवमनुचिन्त्य चिरंजीवी मन्दं मन्दं शब्दमकरोत् । तत् संनिकृ-ष्टस्थाः श्रुत्वोलूका वायसस्यायं शब्द इत्यवधार्य स्वामिने निवेदयन्ति स्म । तच्च श्रुत्वा कौतुकपरोऽरिमर्दनोऽवतीर्य व्यक्तं साधयित्वा सचिवानब्रवीत् । पृच्छ्यतां कस्त्वमिति । अथ तेनोक्तम् । अहं चिरंजीवीति । तच्छ्रुत्वोलूकराजः सविस्मय आह । अयं तस्य वायसराजस्याभिमतो मुख्यो मन्त्रधरः । कथमिमां दशामुप-गतोऽस्ति । स एवं पृष्टस्तमाह । स्वामिन् श्रूयताम् । अस्ति किञ्चित् समुत्सादनं कृत्वा युष्मास्वपयातेषु मेघवर्णो हतशेषान् सैनिकान् दृष्ट्वा परं विषादमगमत् । मन्त्रिभिः सह संप्रधारितवान् । किं बहुना त्वद्विनाशाय प्रारब्धमिति । ततो मयाभिहितम् । बलवन्तस्ते हीना वयं तत्सर्वथा प्रणतिरेव तेभ्योऽस्माकं शिवा-येति । उक्तं च

बलीयसा हीनबलो विरोधं
न भूतिकामो मनसापि कुर्यात् ।
न वध्यते वेतसवृत्तिरथै-
रेकान्तनाशोऽस्ति पतंगवृत्तेः ॥ ५९ ॥

ततोऽयं शत्रुपक्षपातीत्युक्त्वाहमिमामवस्थां निरपेक्षैर्वायसैर्नीतः । तच्च श्रुत्वारि मर्दनः पितृपैतामहैः स्वमन्त्रिभिः सहावधारितवान् रक्ताक्षक्रूराक्षदीप्ताक्षवक्र-नासप्राकारकर्णैः । तत्रादौ रक्ताक्षं पृष्टवान् । भद्र किमेवं गते कार्यमिति । सो ऽब्रवीत् । किमत्र चिन्त्यते । अविचार्य हन्तव्योऽयम् । यत्कारणम् ।

हीनः शत्रुर्निहन्तव्यो यावन्न बलवान् भवेत् ।
संजातबलपौरुष्यः पश्चाद्भवति दुर्जयः ॥ ६० ॥

अपि च स्वयमुपगता श्रीस्त्यज्यमानाभिशपतीति लोकप्रवादः । उक्तं च

कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तेन कालः कर्म चिकीर्षता ॥ ६१ ॥

तदस्मिन्निहते शत्रौ राज्यमकण्टकं भविष्यतीति । तस्यैतद्वचनं श्रुत्वा क्रूराक्षं पप्रच्छ । भद्र त्वं तु किं मन्यसे । सोऽब्रवीत् । देव । अवध्योऽयं शरणागतः । यत्कारणम् ।

वदत्सु दैन्यं शरणागतेषु
बहुप्रहारेषु भयेन युक्ताः ।
दयाविहीनाः प्रहरन्ति येऽत्र
ते रौरवादीनि निषेवयन्ति ॥ ६२ ॥

सर्वोपधिसमृद्धस्य नाश्वमेधस्य यत्फलम् ।
तत्फलं लभते त्वस्ते रक्षिते शरणागते ॥ ६३ ॥

एतदपि श्रुत्वा दीप्ताक्षं पृष्टवान् । भद्र किं भवान् मन्यते । सोऽब्रवीत् । देव निश्चितमेव शरणागतः शत्रुरप्यवध्य इति ।

श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
पूजितश्च यथान्याय्यं स्वैश्च मांसैर्निमन्त्रितः ॥ ६४ ॥
या ममोद्विजते नित्यं सा मामद्यावगूहते ।
प्रियकारक भद्रं ते यन् ममास्ति हरस्व तत् ॥ ६५ ॥

चौरेणाप्युक्तम् ।

हर्तव्यं ते न पश्यामि हर्तव्यं चेद्भविष्यति ।
पुनरप्यागमिष्यामि यदीयं नावगूहते ॥ ६६ ॥

अरिमर्दन आह । कथं चैतत् । सोऽब्रवीत् ।

## अथ स्थविरतरुणभार्याचौरकथा नाम षष्ठी कथा ।

अस्ति कश्चित् सार्थवाहोऽतीताशीतिवर्षोऽर्थप्राधान्यात् तरुणां भार्या-मवाप्तवान् । सा तु नवयौवनसंपन्ना वृद्धसंयोगाद्बालेव्यग्रत्येव निष्प्रयोजनं

यौवनं मन्यमाना तत्समेतापि प्रतिनक्तं शयनतलगता विपरिवर्तमानाङ्गयष्टिः परं दुःखमनुभवति । अथ कदाचिद्रात्रौ तस्य गृहे परवित्तापहारी चौरः प्रविष्टः। तं च दृष्ट्वा सा भयोपगता विपरिवृत्य भर्तारं पीडितमङ्गैरालिङ्गितवती । तथा च वर्तमानेऽसौ प्रीतिप्रहर्षप्रस्पन्दितरोमाञ्चितशरीरः किमिदमत्यद्भुतमसंभाव्यं च मया प्राप्तमिति मत्वा समन्तादवलोकयंश्चौरमपश्यत् । पुनराचिन्तयत् । नूनमेषास्य भयान्मां समालिङ्गति । इति ज्ञात्वा तं चाब्रवीत् । भद्र । या ममोद्विजते नित्यामिति । चौरोऽपि सौहार्दात् तमाह । हर्तव्यं ते न पश्यामीति ।

इति षष्ठी कथा समाप्ता ।

तदत्र चौरस्यापि परवित्तापहर्तुरपकारिणः श्रेयश्चिन्त्यते । किं पुनः शरणागतस्याभ्युपेतस्येति । अपि चायं तैर्विप्रकृतोऽस्माकमेव पुष्ट्ये तदवसादाय च भविष्यति तदीयरन्ध्रदर्शनाय वा । इति । एवमयमवध्यः । इति । एतदाकर्ण्यारिमर्दनोऽन्यं सचिवं वक्रनासं पप्रच्छ । भद्र सांप्रतमेवं स्थिते किं कर्तव्यम् । सोऽब्रवीत् । देव । अवध्योऽयमिति । यतः

शत्रवोऽपि हितायैव विवदन्तः परस्परम् ।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम् ॥ ६७ ॥

राजाह । कथं चैतत् । असावकथयत् ।

## अथ ब्राह्मणचौरराक्षसकथा नाम सप्तमी कथा ।

अस्ति कस्यचिद् दरिद्रब्राह्मणस्य प्रतिग्रहलब्धमाबालभावाद् घृततैललवणयवसयोग्याशनसंवर्धितं सुपुष्टं गोयुगलम् । तच्च दृष्ट्वा चौरः कश्चिदेव चिन्तितवान् । अद्यैव तदपहरिष्यामीति प्रथमप्रदोषसमये गन्तुमारब्धः । गच्छंश्च केनाप्यविज्ञातेन स्कन्धप्रदेशसांश्लिष्टः । अथ तेन भयात् पृष्टः । को भवानिति । स च सत्यवचनमाह । नक्तंचरोऽहं ब्रह्मराक्षसः । भवानपि कथयतु । कस्त्वमिति । सोऽब्रवीत् । अहं चौरः । तेन च पुनः पृष्टः । क्व गच्छति भवानिति । तेनोक्तम् । कस्यचिद्ब्राह्मणस्य गोयुगमपहर्तुमिच्छामि । त्वं पुनः कुतो गच्छसि । अथ विज्ञातप्रत्ययो ब्रह्मराक्षसोऽप्याह । अहमपि तमेव ब्राह्मणं ग्रहीतुं प्रवृत्तः । अथ तौ द्वावपि तत्र गत्वैकान्ते कालमन्वेषयन्तौ स्थितौ ।

प्रसुप्ते च ब्राह्मणे ब्रह्मराक्षसः प्रथमं तद्ग्रहणाय संश्लिष्टश्चौरेणाभिहितः। नैष न्यायः। गोयुगे मयापहृते पश्चाद्ग्रहीष्यसीति। सोऽब्रवीत्। अयमप्यनयः। कदाचिदयं गोशब्देन प्रतिबुध्यते। ततो मे व्यर्थः स्यादागम इति। चौरेणोक्तम्। यदि त्वया गृहीतोऽयं कलकलं कृत्वोत्थास्यति ततः सर्वेऽप्युत्थास्यन्ति। तदाहमपि न शक्नोमि गोयुगमपहर्तुम्। अतः प्रथमं मयापहृते गोयुगे पश्चात्त्वया ब्राह्मणो भक्षयितव्यः। एवं तयोः परस्परं विवदतोर्वैरं समुत्पन्नमहंपूर्विकया च युगपद्ब्राह्मणः प्रतिबुद्धः। चौरस्तावदवोचत्। ब्राह्मण ब्रह्मराक्षसोऽयं त्वां ग्रहीतुमिच्छति। ब्रह्मराक्षसोऽप्याह। चौरोऽयं ते गोयुगलमपहर्तुमिच्छति। एवं श्रुत्वोत्थाय ब्राह्मणः सावधानो भूत्वेष्टदेवतामन्त्रध्यानेनात्मानं राक्षसादुद्गूर्णलगुडेन च चौराद्गोयुगं ररक्ष। ततस्तावुभावपि चौरराक्षसावपयाताविति।

## इति सप्तमी कथा समाप्ता।

अतोऽहं ब्रवीमि। शत्रवोऽपि हितायैवेति। अपि च

शिबिनापि स्वमांसानि कपोतार्थे महात्मना।
श्येनाय किल दत्तानि श्रूयते पुण्यकर्मणा॥ ६८॥

अतस्त्वमपि शरणागतं हन्तुं नार्हसि। ततोऽनन्तरं प्राकारकर्णमपृच्छत्। सोऽप्येवमेव समर्थितवान्। अथ पुनरपि समुत्थायान्तर्लीनमवहस्य रक्ताक्षोऽब्रवीत्। कष्टं विनाशितोऽयं स्वामी युष्माभिरनयेन। उक्तं च

प्रत्यक्षेऽपि कृते दोषे मूर्खः सान्त्वेन तुष्यति।
रथकारः स्वकां भार्यां सजारां शिरसावहत्॥ ६९॥

ते प्राहुः। कथं चैतत्। सोऽब्रवीत्।

## अथ जारिणीपतिरथकारकथा नामाष्टमी कथा।

अस्ति कस्मिंश्चिदधिष्ठाने रथकारः। तस्य प्रिया भार्या पुंश्चल्येवं मित्रस्वजनैः प्रतिबोधितः। ततोऽसौ रथकारो जिज्ञासुस्तामाह। प्रिये विप्रकृष्टे ग्रामान्तरे राजकीयो मण्डपः कर्तव्यः। तत्र मया श्वो गन्तव्यम्। तत्र दिनानि कतिचिल्लगिष्यन्ति। तत्त्वया किंचित् पाथेयं मम योग्यं विधेयम्। तया च तुष्टया यथाज्ञप्तमेव शम्बलं कृतम्। तथा चानुष्ठिते गृहीतोपस्करपथ्योदनः प्रहरशेषायां

शर्वर्यां तामाह । गतोऽहं भद्रे द्वारं संवृणीष्वेति । रथकारोऽप्यविज्ञात एव प्रतिनिवृत्य स्वगृहेऽपद्वारेण प्रविश्य स्वशय्याधस्तल आत्मद्वितीयः सह शिष्येणावस्थितः । असावपि हृष्टहृदयाद्य मम निरङ्कुशो दयितजनसमागम इति दूतिकया विटमानाय्य तत्रैव निर्विशङ्कपानभोजनाद्यनुष्ठितवती । कथमपि चाप्राप्तरतयैव पादौ चालयन्त्या जानुप्रदेशे रथकारः स्पृष्टः । ततोऽसावचिन्तयत् । असंशयं स एव रथकारो भविष्यति । तत्कथं करणीयमिति । अस्मिन्नन्तरे सशपथं विटेनाभिहिता । भद्रे कथय मम वा भर्तुर्वा तव कः प्रियतर इति । यतस्तया प्रतिपत्तिकुशलयाभिहितः । प्रष्टव्यं पृच्छासि । स्त्रियो हि नाभैता लघुधर्मिण्यो यत्किंचनप्रवृत्ताश्च । किं बहुना यद्यासां नासिका न स्युरसंशयममेध्यमपि भक्षयेयुरिति संक्षेपः । यद्यहमीषन्मात्रमप्यकुशलं भर्तुः शृणुयां सद्यः प्राणपरित्यागं कुर्यामिति । अथ रथकारस्तया धर्षण्या कृतकवचनव्यंसितमनाः शिष्यमवोचत् । विजयतां ममात्यन्तभक्ता दयिता । सर्वजनसकाशं संमानयामि । इत्युक्त्वा शिरसि कृत्वा खट्वासीनां सजारां राजमार्गरथ्यान्तरेषु भ्रामयञ्जनहासमवाप्तवान् ।

इत्यष्टमी कथा समाप्ता ।

अतोऽहं ब्रवीमि । प्रत्यक्षेऽपि कृते दोष इति । तत्सर्वथा मूलोत्खाता वयं विनष्टाः स्मः । सुष्ठु खल्विदमुच्यते ।

मन्त्रिरूपा हि रिपवः संभाव्यास्ते विचक्षणैः ।
ये हितं नयमुत्सृज्य विपरीतोपसेविनः ॥ ७० ॥
सन्तोऽपि हि विनश्यन्ति देशकालनिराकृताः ।
अप्राज्ञं मन्त्रिणं प्राप्य तमः सूर्योदये यथा ॥ ७१ ॥

तदापि तद्वचनमनादृत्यैव चिरंजीविनमुद्धृत्य स्वदुर्गं नेतुमारब्धः । अथ चिरंजीव्याह विश्वासार्थम् । देव किं मयैतदवस्थेनाकिंचित्करेण संगृहीतेन । किं ममैतदवस्थस्य जीवितेन । तदग्निं मे दापय तस्मिन्नात्मानं प्रक्षिपामीति । रक्ताक्षेण तु तस्यान्तर्निहितभावसूचितमाकारं ज्ञात्वाभिहितम् । किमग्निसंपातमिच्छति भवान् । सोऽब्रवीत् । अहं तावद्युष्मदर्थमिमामापदं प्राप्तः । तदिच्छामि तेषां वैरनिर्यातनार्थमुलूकयोनिमग्नौ हुतशरीरप्रभावादिति । रक्ताक्षोऽब्रवीत् ।

अन्तर्भावनिगूढेयं वाक्ते प्रकृतिपेशला ।
विकाराद्यनभिज्ञेया विषदिग्धेव वारुणी ॥ ७२ ॥

दुष्ट । अशक्या तवोलूकयोनिरसंभाव्या च । यत्कारणम्

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् ।
स्वयोनिं मूषिका प्राप्ता योनिर्हि दुरतिक्रमा ॥ ७३ ॥

सोऽब्रवीत् । कथं चैतत् । रक्ताक्षोऽब्रवीत् ।

## अथ मूषककुमारीकथा नाम नवमी कथा ।

अस्ति कस्मिंश्चिद्देश ऋषिस्तस्य जाह्नव्यां स्नात्वोपस्प्रष्टुमारब्धस्य करतले श्येनमुखपरिभ्रष्टा मूषकशाविका पतिता । तां दृष्ट्वा न्यग्रोधपत्रेऽवस्थाप्य पुनः स्नात्वोपस्पृश्य च प्रायश्चित्तादिक्रियां कृत्वा च गृहाभिमुखः प्रायात् । मूषिकां च स्मृत्वाचिन्तयत् । नृशंसमेतन्मया कृतं मातृपितृपरिभ्रष्टां मूषिकां परित्यजता । ममैवायमधर्मो यत्कारणमहमस्या अधुना नाथः । इति मत्वा प्रतिनिवृत्य तां मूषिकां स्वतपोबलेन कन्यां कृत्वा गृहमानीयानपत्यायै भार्यायै प्रायच्छदाह च भद्रे गृह्यतामियं तव दुहितोत्पन्ना प्रयत्नेन संवर्धनीया । इति । ततस्तया संवर्धिता लालिता च । अथ कालेन द्वादशवर्षे प्राप्ते विवाहकार्ये तस्याश्चिन्तामृषिरापेदे । अयुक्तोऽस्याः कालातिक्रमो यत्कारणं ममैवायमधर्मः । उक्तं च

पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
अविवाह्या तु सा कन्या दम्पती वृषलौ स्मृतौ ॥ ७४ ॥

अतोऽहमेनां सदृशाय बलवते प्रयच्छामि । उक्तं च

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः ॥ ७५ ॥

स एवं मत्वा भगवन्तं सहस्रकिरणमाहूयाभिहितवान् ।

त्वं बलवान् विवाह्यतां मम दुहितेयमिति । असावपि भगवाँल्लोकपालंसर्ववृत्तान्तप्रत्यक्षदर्शी तमाह । भगवन् मत्तो मेघा बलवत्तराः । अहं तैराच्छादितोऽदृष्टो भवामीति । एवमेतदित्युक्त्वा मुनिर्मेघमाहूयाब्रवीत् । गृह्यतां मे दुहितेति । सोऽप्याह । मत्तोऽपि बलवान् वायुः । तेनाहमितश्चेतश्च दिग्भ्यो

विक्षिप्य इति। अथ तेन वायुरप्याहूतः। गृह्यतां मद्दुहितेति। एवमुक्तोऽसावब्रवीत्। भगवन् मत्तो बलवत्तराः पर्वता यतोऽहं तानङ्गुलमात्रमपि चालयितुमशक्तः। ततोऽसावचलमाहूयाभिहितवान्। गृह्यतां मम कन्येति। स आह। नूनमचला वयं किंत्वस्मत्तो मूषका बलवत्तराः। तैरितश्चेतश्च शतछिद्राः क्रियामहे। एवमुक्ते मुनिना मूषक आहूयोक्तः। गृह्यतां मम कन्येति। ततोऽसावाह। विधुरमिदं कथमियमस्मद्विवरं प्रवेक्ष्यतीति। अथासौ सत्यमेतदिति स्वतपोबलेन पुनस्तां कन्यां मूषिकामेव कृत्वा मूषकाय प्रतिपादितवान्।

इति नवमी कथा समाप्ता।

अतोऽहं ब्रवीमि। सूर्यं भर्तारमुत्सृज्येति। अथ रक्ताक्षवचनमनादृत्यैव चिरंजीविनमादाय स्ववंशविनाशायात्मीयं दुर्गं ययौ। नीयमानश्चान्तर्लीनमवहस्य चिरंजीवी व्यचिन्तयत्।

वध्यतामिति येनोक्तं स्वामिनो हितवादिना।
स एवैकोऽत्र मन्त्रिभ्यो नीतिशास्त्रार्थतत्त्ववित्॥ ७६॥

यद्यप्येते शृणुयुस्तदाशा मे सफला न स्यादिति। अथ दुर्गद्वारं प्राप्यारिमर्दनस्तान् सचिवानब्रवीत्। यथेप्सिते स्थानेऽवस्थाप्यतां चिरंजीवीति। चिरंजीविनापि प्राप्तकालं सुखमपसरिष्यामीति दुर्गद्वारेऽवस्थानं कल्पितम्। प्रतिदिनं च दिग्विजयमात्मेच्छया कृत्वोलूकाः कृताहारा राजादेशात् सुप्रभूतं मांसमादाय चिरंजीविने प्रायच्छन्। असावपि रक्ताक्षः स्वकुटुम्बमाहूयोक्तवान्। अचिरादस्माद्वायसादहं विनाशं पश्यामि। तन्न युक्तमेभिः सह मूढैरेकत्र वस्तुम्। यतोऽन्यामद्रिगुहामाश्रित्य सुखं वत्स्यामः। एवमुक्त्वा रक्ताक्षः सपरिजनोऽन्यत्र प्रायात्। ततोऽसावपि चिरंजीवी वायसोऽल्पीयसा कालेन संजातबलपक्षो मयूर इव गौराङ्गः संवृत्तः शत्रुबलवीर्यदुर्गस्थानछिद्रमार्गादिकं ज्ञात्वा चैवमचिन्तयत्।

दृष्टः सारो बलं चैषां दुर्गं चापि यथार्थतः।
अहीनकालमधुना कर्तव्यः संक्षयो द्विषाम्॥ ७७॥

इत्यालोच्योलूकोत्पाटनाय दुर्गद्वारकोटरान् करीषपूर्णान् कृत्वा सत्वरं

मेघवर्णसमीपं गतः । मेघवर्णेन सोत्सुकमालिङ्ग्य वार्तां पृच्छ्यमान एवमुक्तवान् । स्वामिन् नायं वार्ताकथनकालः । कालोऽतिक्रामति परम् । तेन यूयं सर्व एवैकैकां काष्ठिकां गृहीत्वा गच्छत । अहमपि वह्निं गृहीत्वागमिष्यामि । सहसैव गत्वा सर्वशत्रुसहितं शत्रुस्थानं दह्यतामिति । तथैव कृत्वा करीषपूर्णकोटरेषु काष्ठादिकं दत्त्वा वह्निर्निक्षिप्तः । अनन्तरमेकदैव सर्वे शत्रवो निर्मूलिताः । दग्ध्वा च नागलोकान्तां गुहामवाप्तसकलमनोरथश्चिरंजीवी पुनर्मङ्गलकल्याणाभ्युदयलक्षणेन घोषेण तस्मिन्नेव न्यग्रोधपादपे सर्वप्रकृतिसमेतं राजानं मेघवर्णमास्थापितवान् । अनन्तरं निर्जितारिर्मेघवर्णश्चिरंजीविनं नानाप्रकारेण संपूज्य सहर्षमेवमाह । तात कथं त्वया शत्रुमध्यगतेन कालो नीतः ।

वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम् ।
न चारिजनसंसर्गो मुहूर्तमपि सेवितः ॥ ७८ ॥

स आह । भद्र

उपनतभये यो यो मार्गो हितार्थकरो भवेत्
स स निपुणया बुद्ध्या सेव्यो महान् कृपणोऽपि वा ।
करिकरनिभौ ज्याघाताङ्कौ महास्त्रविशारदौ
वलयरचितौ स्त्रीवद्बाहू कृतौ न किरीटिना ॥ ७९ ॥

शक्तेनापि सदा जनेन विदुषा कालान्तरापेक्षिणा
वस्तव्यं खलु वज्रपातविषमे क्षुद्रेऽपि पापे जने ।
दर्वीव्यग्रकरेण धूममलिनेनायासखिन्नेन किं
भीमेनातिबलेन मत्स्यभवने सूदा न संघट्टिताः ॥ ८० ॥

यद्वा तद्वा विषमपतितः साधु वा गर्हितं वा
कालापेक्षी हृदयनिहितं बुद्धिमान् कर्म कुर्यात् ।
किं गाण्डीवस्फुरदुरुगुणास्फालनव्यग्रपाणि–
र्नासील्लीलावलयितरणन्मेखलः सव्यसाची ॥ ८१ ॥

सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं
सत्त्वोत्साहवतापि दैवविधिषु स्थैर्यं समीक्ष्य क्रमम् ।

देवेन्द्रद्रविणेश्वरान्तकसमैरभ्यर्चितो भ्रातृभिः
किं क्लिष्टः सुचिरं त्रिदण्डमवहच्छ्रीमान्न धर्मात्मजः ॥८२॥
रूपाभिजनसंपन्नौ माद्रीपुत्रौ गुणान्वितौ ।
गोसप्तिकर्मव्यापारे विराटप्रेष्यतां गतौ ॥ ८३ ॥
रूपेणाप्रतिमेन यौवनगुणैर्वंशे शुभे जन्मना
युक्ता श्रीरिव या तया विधिवशात् कालक्रमायातया ।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपमाज्ञप्तया
द्रौपद्या ननु मत्स्यराजभवने घृष्टं चिरं चन्दनम् ॥ ८४ ॥

मेघवर्ण आह । असिधाराव्रतमिव मन्येऽरिणा सह संवासः । सोऽब्रवीत् । देव । एवमेतत् । तथापि

सहते सुहृदिव भूत्वा प्राज्ञः शक्तिक्षये निराकारः ।
कालं प्रतीक्षमाणः प्रीतिप्रच्छादिताशक्तिः ॥ ८५ ॥

तत्किं वहुना न तादृङ्मया मूर्खसमागमो दृष्टपूर्वो वर्जयित्वैकं रक्ताक्षम् । तेन तु मम यथावस्थितं हृद्गतं ज्ञातम् । अन्ये ते पुनर्नाममात्रमन्त्रिणः । किं तैरेतद्यैर्न विज्ञातम् ।

अरितोऽभ्यागतो भृत्यः शत्रुसंवासतत्परः ।
सर्पसंवासधर्मित्वान् नित्योद्वेगेन दूषितः ॥ ८६ ॥
प्लक्षन्यग्रोधबीजाशात् कपोतादिव शाल्मलेः ।
मूलोत्खातकरो दोषः पश्चादपि भयंकरः ॥ ८७ ॥
आसने शयने याने पानभोजनवस्तुषु ।
दृष्टादृष्टप्रमत्तेषु प्रहरन्त्यरयोऽरिषु ॥ ८८ ॥
तस्मात्सर्वप्रयत्नेन त्रिवर्गनिलयं बुधः ।
आत्मानमादृतो रक्षेत् प्रमादाद्धि विनश्यति ॥ ८९ ॥

साधु चेदमुच्यते ।

दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः
संतापयन्ति कमपथ्यभुजं न रोगाः ।

कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परितापयन्ति ॥ ९० ॥
स्तब्धस्य नश्यति यशो विषमस्य मित्रं
नष्टक्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ ९१ ॥
शुष्केन्धने वह्निरुपैति वृद्धिं
मूढेषु शोकश्चपलेषु कोपः ।
कान्तेषु कामो निपुणेषु विद्या
धर्मो दयावत्सु महत्सु धैर्यम् ॥ ९२ ॥

तद्राजन् यत्त्वयोक्तमसिधाराव्रतमिवारिसंपर्कोऽनुभूत इति तत्सत्यम् । अभिज्ञः खल्वासि । किंतु

स्कन्धेनापि वहेच्छत्रुं कार्यमासाद्य बुद्धिमान् ।
वहता कृष्णसर्पेण मण्डूका विनिपातिताः ॥ ९३ ॥

सोऽब्रवीत् । कथं चैतत् । चिरंजीव्याह ।

## अथ मण्डूकानां कृष्णसर्पारोहणकथा नाम दशमी कथा ।

अस्ति कश्चित्परिणतवया मन्दविषो नाम कृष्णसर्पः । स एवं समर्थितवान् । कथं नामानया वृत्त्या सुखं वर्तेयमिति । ततो बहुमण्डूकं ह्रदं गत्वाधृतिपरीतमात्मानं दर्शयन् स्थितः । अथ तथा स्थिते तस्मिन्नुदकान्तर्गतेनैकेन मण्डूकेन पृष्टः । माम किमद्य यथापूर्वमाहारार्थं न विहरसि । इति । स आह । भद्र कुतो मे मन्दभाग्यस्याहारेऽभिलाषः । यत्कारणम् । अद्य रात्रौ प्रथमप्रदोष एव मयाहारार्थं विहरमाणेन दृष्ट एको मण्डूकः । तद्ग्रहणार्थं मया क्रमः सज्जितः । सोऽपि मां दृष्ट्वा मृत्युभयेन स्वाध्यायप्रसक्तानां ब्राह्मणानामन्तरपक्रान्तो न विभावितो मया क्वापि गतः । तत्सादृश्यमोहितचित्तेन मया कस्यचिद्ब्राह्मणसूनोरङ्गुष्ठो दष्टः । ततोऽसौ सपदि पञ्चत्वमागतः । तत्पित्रा दुःखार्तेनाहं शप्त उक्तश्च । दुरात्मन् यत्त्वया ममानपराधी सुतो दष्टस्तेन दोषेण त्वं मण्डूकानां वाहनं भवि-

ष्यसि । तत्प्रसादनलब्धां च वृत्तिमासादयिष्यसीति । ततोऽहं युष्माकं वाहनार्थमागतः । तेन च सर्वमण्डूकानामिदमावेदितम् । ततस्तैः प्रहृष्टमनोभिः सर्वैरेव गत्वा मण्डूकराजाय जालपादनाम्ने निवेदितम् । अथासावपि मन्त्रिपरिवृतोऽत्यद्भुतमिति मन्यमानः ससंभ्रममागत्य ह्रदादुत्तीर्य संतुष्टस्तत्पृष्ठमाधिरूढः । तदनुक्रमशो यथास्थानभाज उपासिताः । अन्ये चानाप्नुवन्तोऽनुपदं धावन्ति । मन्दविषोऽप्यात्मपुष्ट्यर्थमनेकप्रकारगतिविशेषानदर्शयत् । अथ जालपादो लब्धस्पर्श एवाह ।

न तथा करिणा यानं रथेन तुरगेण वा ।
नरयानेन नावा वा यथा मन्दविषेण मे ॥ ९४ ॥

अथ मन्दविषमन्येद्युश्छद्मग्लानं जालपादोऽब्रवीत् । भद्र किमित्यद्य मन्दं मन्दमुह्यते न यथा पुरेति । स आह । देव । अद्याहारवैकल्यान्न मे यथापूर्वं वोढुं शक्तिरस्ति । अथासावब्रवीत् । भद्र भक्षय क्षुद्रमण्डूकानिति । स आह । ममापीयमाशा किं तु पादीयाज्ञया कृतप्रसादो भक्षयिष्यामि । इति त्वदायत्तजीवितोऽस्मि । ततोऽसावनुज्ञातः क्रमान् मण्डूकान् यथेष्टमभक्षयत् । कतिपयैरेवाहोभिर्बलवान् संवृत्तः । सुपरितुष्टश्चान्तर्लीनमवहस्याब्रवीत् ।

मण्डूका विविधाहाराश्छलपूर्वोपसाधिताः ।
कियन्तं कालमक्षीणा भवेयुः खादतो मम ॥ ९५ ॥

अथ तच्छ्रुत्वा जातशङ्को जालपादः किमनेनाभिहितमिति तमपृच्छत् । किं त्वयाभिहितम् । यतोऽसावाकारप्रच्छादनायाह । न किंचिदिति । पुनश्च प्रतिबोध्यमानोऽब्रवीत् । स्वामिन् मयैतदुक्तम् ।

वरं तीव्राशनिध्वस्तो भवेच्छैलोऽङ्घ्रिपोऽपि वा ।
न विप्रशापनिर्दग्धो जन्तुर्भूयात् कदाचन ॥ ९६ ॥

अथैवं वर्तमाने जालपादः कृतकवचनव्यंसितमना नैवावबुध्यते । किं बहुना तथा तेन ते सर्वेऽपि भक्षिता यथा बीजमात्रमपि नावशिष्टम् ।

## इति दशमी कथा समाप्ता ।

अतोऽहं ब्रवीमि । स्कन्धेनापि वहेच्छत्रुमिति । तद्राजन् यथा मन्दविषेण मण्डूका निहतास्तथा मयाप्यशेषाः शत्रवो हताः । तथा च

वने प्रज्वलितो वह्निर्दहन् मूलानि रक्षति ।
समूलमुन्मूलयति वार्योघो मृदुशीतलः ॥ ९७ ॥

मेघवर्ण आह । एवमेतत् । अपि च

महत्त्वमेतन्महतां नयालंकारधारिणाम् ।
न मुञ्चन्ति यदारम्भं कृच्छ्रेऽपि व्यसनोदये ॥ ९८ ॥

तदेवं भवता निःशेषाः शत्रवः कृताः । सोऽब्रवीत् । देव । एवमेतत् । उक्तं च—

ऋणशेषमग्निशेषं व्याधिशेषं तथैव च ।
अरिशेषं च निःशेषं कृत्वा प्राज्ञो न सीदति ॥ ९९ ॥

देव भाग्यसंपन्नस्त्वमेवासि । सर्वमारब्धं युष्मदर्थे सिध्यति । अपि च

शक्तं युक्तेन संधत्ते युक्तमाशुपराक्रमैः ।
तावुभौ वृद्धिसंपन्नौ क्रमव्ययसमन्वितौ ॥ १०० ॥

जितात्मनः सत्यवतो धीमतो व्यवसायिनः ।
किं नामैवंविधस्यापि अयातव्यपदे स्थितम् ॥ १०१ ॥

संप्राप्ते व्यसने न सीदति मतिः सिद्धौ न संहृष्यते
क्रोधं संहरति क्षमां च कुरुते काले च विस्पन्दते ।
कौलीनानि च संवृणोत्यवहितश्छिद्रेषु जागर्ति य-
स्तस्यैवं चरितस्य वश्यमनसो हस्तस्थिताः संपदः ॥१०२॥

कोऽहं कौ देशकालौ समविषमगुणाः के द्विषः के सहायाः
का शक्तिः कोऽभ्युपायो हितकरणविधौ का च मे दैवसंपत् ।
संपत्तेः कोऽनुबन्धः प्रतिहतवचनस्योत्तरं किं च मे स्या-
दित्येवं कार्यसिद्धाववहितमनसो नावसीदन्ति सन्तः ॥१०३॥

तन्न केवलमेकान्ततः शौर्यं परं कार्यं साधयति । उक्तं च

शस्त्रैर्हता हि रिपवो न हता भवन्ति
प्रज्ञाहतास्तु सुहता न पुनर्भवन्ति ।
शस्त्रं निहन्ति पुरुषस्य शरीरमेकं
प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ १०४ ॥

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ १०५ ॥

तदेवं दैवपुरुषकाराभ्यां युक्तस्यायत्नेन कार्यसिद्धयः संभवन्ति । यतः

प्रसरति मतिः कार्यारम्भे दृढीभवति स्मृतिः
स्वयमुपनमन्त्यर्था मन्त्रो न गच्छति विप्लवम् ।
फलति सकलं तत्किं चित्तं समुन्नतिमश्नुते ।
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ १०६ ॥

तत्त्यागबुद्धिशौर्यसंपन्नस्य राज्यमिति । उक्तं च

त्यागिनि शूरे विदुषि च वसति जनः स च जनो गुणीभवति ।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम् ॥ १०७ ॥

मेघवर्ण आह । तात सद्यः फलति नीतिशास्त्रं यत्त्वयानुकूल्येनानुप्रविश्योलूकराजोऽरिमर्दनः सपरिजनो निःशेषः कृतः । चिरंजीव्याह । देव

तीक्ष्णोपायप्राप्तिगम्योऽपि योऽर्थ-
स्तस्याप्यादौ संश्रयः साधु युक्तः ।
उत्तुङ्गाग्रः सारभूतो वनानां
नानभ्यर्च्य छिद्यते पादपेन्द्रः ॥ १०८ ॥

अथवा स्वामिन् किं तेनाभिहितेन यदन्तं क्रियाकालरहितम् । साध्वभिहितम् ।

अनिश्चितैरध्यवसायभीरुभि-
र्यथेष्टसंलापरतिप्रयोजनैः ।
फले विसंवादमुपागता गिरः
प्रयान्ति लोके परिहास्यवस्तुताम् ॥ १०९ ॥

न च लघुष्वपि कर्तव्येषु धीमद्भिरनादरः कार्यः । यत्कारणम् ।

शक्ष्यामि कर्तुमिदमल्पमयत्नसाध्य-
मत्रादरः क इति कृत्यमवेक्षमाणाः ।
केचित् प्रमादतमसा परितापदुःख-
मापत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति ॥ ११० ॥

तदद्य जितारेर्मद्विभोर्यथापूर्वं निद्रालाभो भविष्यति । उच्यते चैतत् ।

निःसर्पे हतसर्पे वा भवने सुप्यते सुखम् ।
दृष्टनष्टभुजङ्गे तु निद्रा दुःखेन लभ्यते ॥ १११ ॥

विस्तीर्णव्यवसायसाध्यमहतां स्निग्धैः प्रयुक्ताशिषां
कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम् ।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गताः
सामर्षे हृदयेऽवकाशविषया तावत्कथं निर्वृतिः ॥११२॥

तदवासितकार्यारम्भस्य हि मे विश्राम्यतीव मनः । कथम् ।

विषितज्वरामिव हृदयं गात्रं लघुतरमिवावासितभारम् ।
तीर्णार्णवस्य च मनो भवति रिपाववसितप्रतिज्ञस्य ॥ ११३ ॥

तदिदमधुना निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रपौत्रादिक्रमेणाचलच्छत्रासनश्रीश्चिरं भुङ्क्ष्व । अपि च

प्रजां न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ।
अजागलस्तनस्येव तस्य नाम निरर्थकम् ॥ ११४ ॥

गुणेषु रागो व्यसनेष्वनादरो
रतिः सुनीतेषु च यस्य भूपतेः ।
चिरं स भुङ्क्तेऽचलचामरांशुकां
सितातपत्राभरणां नृपश्रियम् ॥ ११५ ॥

न च त्वयावाप्तराज्योऽहमिति कृत्वा श्रीमदेनात्मा व्यंसयितव्यः । यत्कारणम् । चला हि राज्ञां विभूतयः । कथम् । वंशारोहणवद्राज्यलक्ष्मीरारोप्यक्षणनिपाता पारतरसवत् प्रयत्नशतैरपि दुर्वार्या स्वाराधिताप्यन्ते विप्रलम्भिनी वानरपतिरिवानेकचित्तचपला पद्मपत्रोदकराजिरिव दुःसंश्लेषणीया पवनगतिरिव चटुलानार्यसंगतिरिवास्थिराशीविषजातिरिव दुरुपकार्या संध्याभ्ररेखेव मुहूर्तरागा जलबुद्बुदपङ्क्तिरिव स्वभावभङ्गुरा शरीरप्रकृतिरिव क्रियमाणकृतघ्ना स्वप्नलब्धद्रविणराशिरिव क्षणदृष्टनष्टा । किं बहुना

यदैव राज्ये क्रियतेऽभिषेक-
स्तदैव बुद्धिर्व्यसनेषु योज्या ।

घटा हि राज्ञामभिषेककाले
सहाम्भसैवापदमुद्गिरन्ति ॥ ११६ ॥

न च कश्चिदनधिगमनीयो नामास्त्यापदाम् । उक्तं च

रामप्रव्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात् परिभ्रंशनम् ।
विष्णोर्वामनतां तथार्जुनवधं संचिन्त्य लङ्केश्वरं
सर्वं कालवशादुपैति पुरुषः कः कं परित्रायते ॥ ११७ ॥

क च दशरथः स्वर्गे युद्ध्वा सुरेन्द्रसुहृद्गतः
क च जलनिधेर्वेलां बद्ध्वा नृपः सगरो गतः ।
क च करतलाज्जातो वैन्यः क सूर्यतनुर्मनु-
र्ननु बलवता कालेनैते प्रबोध्य निमीलिताः ॥ ११८ ॥

नृपतिः सचिवाः प्रमदाः पुराणशोच्यानि काननवनानि ।
स च ते च ताश्च तानि च कृतान्तदंष्ट्राविनष्टानि ॥ ११९ ॥

श्रुतेन बुद्धिर्व्यसनेन मूर्खता
मदेन नागः सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना
नयेन चालंक्रियते नरेन्द्रता ॥ १२० ॥

मुदं विषादः शरदं हिमागम-
स्तमो विवस्वान् सुकृतं कृतघ्नता ।
प्रियोपपत्तिः शुचमापदं नयः
श्रियं समृद्धामपि हन्ति दुर्नयः ॥ १२१ ॥

तत्सर्वथा प्रजा न्यायेन मन्त्वसुखमनुवर्तयन् राजा राज्यसुखमनुभवतीति ।

इति संधिविग्रहं काकोलूकीयं नाम तृतीयं तन्त्रं समाप्तम् ।

## अथ लब्धनाशं नाम चतुर्थं तन्त्रम्

अथेदमारभ्यते लब्धनाशं नाम चतुर्थं तन्त्रम् । यस्यायमाद्यः श्लोकः ।

प्राप्तमर्थं तु यो मोहात् सान्त्वतः प्रतिमुञ्चति ।
स तथा वञ्च्यते मूढो जलजः कपिना यथा ॥ १ ॥

राजपुत्रा आहुः । कथमेतत् । विष्णुशर्माऽब्रवीत् । अस्ति कस्मिंश्चित् समुद्रतीरे वलीवदनको नाम वानरराजः प्रतिवसति स्म । स च वृद्धत्वादसामर्थ्यतयान्येन नवयौवनसंपन्नेन कपिनातिवेर्ष्यानलप्रताप्यमानहृदयेनामर्षित्वा-द्वद्धवैरेण तस्मात् स्वयूथान्निरस्तः कालं यापयति स्म । तस्मिन्नेव तीरे मधुगर्भो नामोदुम्बरास्तिष्ठति । तत्फलाहारेण प्राणयात्रां करोति । अथ कदाचित्तस्य भक्षयतः करादुदुम्बरफलं जले पतितम् । तेन चाम्भसि पतता मनोहरः कलरव उत्पन्नः । तं श्रुत्वा वानरः सहजचापलात् पुनः पुनरन्यान्युदुम्बरफलानि श्रुतिसुख-करणानीत्यपनीय प्रक्षिपति स्म । अथ कदाचित्तस्याधस्ताद्गच्छन् कृशको नाम शिशुमारस्तानि प्रकामतो लब्ध्वा भक्षयति स्म । ततोऽसौ तत्रैव मधुराहारला-भेन स्थितः । उत्पन्नप्रीतिसौहार्दश्च वलीवदनकस्तेन सह स्वयूथाद्भ्रंशमपि विस्मृतवान् । शिशुमारोऽप्यतीवस्नेहाक्षिप्तहृदयः स्वगृहगमनकालक्षेपमकरोत् । अथ तस्य भार्या सखीमध्यगता तद्विरहात् परितप्तहृदया क्वासौ मम दयितः किं बहिः करोत्यतिप्रसक्त्या । सुप्रभूतश्चाद्य कालः । त्रिवर्गं परिहार्यात्मानं नाव-धारयति । अथ तस्याः सख्येकाब्रवीत् । कुतस्ते गृहं धनं वा तेन भर्त्रा यस्य त्वं चरितानि न जानासि । स तु मया प्रत्यक्षमेव दृष्टः कयापि वानर्या सह समुद्र-तीरैकदेशे परमप्रीतिपुरःसरं रहसि रममाणः । तदेवं ज्ञात्वा यत्ते करणीयं तदर्हान-कालं क्रियतामिति । तच्च श्रुत्वा शिशुमारभार्या परं मनस्तापमगमत् सर्वव्यापारांश्च गृहगतानुत्सृज्य मलिनवसना तैलाभ्यक्तशरीरा शयनतलगताधृतिपरीतगात्री सखीपरिवृतावस्थिता । शिशुमारोऽपि वलीवदनकप्रीत्यतिक्रान्तवेलो गृहं प्रत्यागतोऽपश्यज्जायां तदवस्थामपृच्छच्चाविग्नहृदयः । किमिदमस्या अस्वास्थ्यकारणमिति । मूकतया न काचिदपि सखी कथयति स्म । सादरमेव मुहुर्मुहुरपृच्छत् । अथ तत्रैका द्वितीयमिव हृदयं शिशुमारभार्यायाः सा परमावेगं सूचयन्त्यब्रवीत् । आर्य ।

अशक्योऽयं व्याधिरस्याः । अद्यापि विनष्टा नामेयमिति मन्तव्यम् । नास्याः प्रत्यापत्तिरस्तीति । एतच्छ्रुत्वा शिशुमारः परं विषादमगमत् प्रियकलत्रतया चाब्रवीत् । यदि मज्जीवितेनाप्यस्याः प्रतीकारस्तदिमे प्राणा उपयुज्यन्तामेतदर्थमिति । साब्रवीत् । भद्र । अस्त्युपाय एक एवास्या व्याधेः । यदि वानरहृदयोपपत्तिरस्ति ततोऽस्या जीवितम् । अन्यथातिक्रान्ता नामेयमिति । एतत् स्त्रीरहस्यमिति । ततोऽसौ स्वगतमचिन्तयत् । किमिदं कष्टमापतितम् । कथं वानरहृदयस्य लाभोऽन्यत्र वलीवदनकात् । तदप्यतिगर्हितं धर्मविरुद्धं च । अथवा

किं कलत्रं प्रधानं स्यादुत मित्रं गुणाधिकम् ।
कलत्रमित्रयोर्नूनं कलत्रमतिरिच्यते ॥ २ ॥
तस्मात् त्रिवर्गोऽविकलस्ततो मित्रं ततो यशः ।
सर्वलोकान्वितं चैव कस्तन्न बहु मन्यते ॥ ३ ॥

किंकर्तव्यतामूढः पुनरचिन्तयत् ।

एकः सखा प्रियो भूय उपकारी गुणान्वितः ।
हन्तव्यः स्त्रीनिमित्तेन कष्टमापतितं मम ॥ ४ ॥

इति विचिन्त्य गमनव्याहतमना वलीवदनकं मन्दं मन्दमगमत् । तं मन्दमागतं दृष्ट्वा वानरेणोक्तम् । भद्र किमद्य व्याक्षेपकारणं भवतः । सोऽब्रवीत् । वयस्य दुःखमिदमुच्यते । न शक्नोमि भवतोऽतिप्रसङ्गं कर्तुम् । यत्कारणम् । एतावतापि कालेनैकान्तोपकारिणो भवतो न मया किंचिदपि प्रत्युपकर्तुं शकितम् । अपि च

प्रयोजनवशात् प्रीतिं लोकः समनुवर्तते ।
त्वं तु वानरशार्दूल निष्प्रयोजनवत्सलः ॥ ५ ॥

अथवा युक्तमेवेदं भवतः ।

उपकर्तुमनुपकर्तुः प्रियाणि कर्तुं कृतान्यनुस्मर्तुम् ।
विनिपतितांश्चोद्धर्तुं कुलान्वितानामुचितमेतत् ॥ ६ ॥

सोऽब्रवीत् । नन्वयमेवासम उपकारो यत्स्वदेशबन्धुपरित्यागेऽपि कृते संपन्नप्रीतियोगाद्भवन्तमाश्रित्यानुद्विग्नः सुखं यापयामीति । साध्विदमुच्यते ।

शोकारतिभयत्राणं प्रीतिविस्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ ७ ॥

शिशुमार आह ।

दर्शितानि कलत्राणि गृहे भुक्तमशङ्कितम् ।
कथितानि रहस्यानि सौहृदं किमतः परम् ॥ ८ ॥

तद्गृहगमनदारदर्शनैकपात्राभिसंबन्धी मया भवान् न कृतः । वानरेणोक्तम् । किमनेन सामान्यजनस्यायं संबन्धः । अपि च

खले नटानामिव दारदर्शनं
गवामिवापार्थकमेव भोजनम् ।
सन्तः प्रकृत्यैव हि येन संगमं
कुर्वन्त्ययत्नादपि तस्य यद्धितम् ॥ ९ ॥

सोऽब्रवीत् ।

किमत्र चित्रं यदि सज्जनो जनः
करोति विद्वज्जनसाधुपूजनम् ।
करोति यन्नीचकुलोद्भवो जन-
स्तदद्भुतं शैत्यमिवार्कमण्डले ॥ १० ॥

तथापि

मित्रं वा बन्धुं वा नैवातिप्रणयपीडितं कुर्यात् ।
स्वं वत्समतिपिबन्तं विषाणकोट्याक्षिपति धेनुः ॥ ११ ॥

तद्भद्र ममापि भवते किंचित् प्रत्युपकरणमस्ति । अस्ति समुद्रमध्ये सुरम्ये द्वीपप्रदेशेऽस्मद्गृहम् । तत्रामृतास्वादतुल्याः कल्पवृक्षसदृशास्तरवः । तन्मम पृष्ठमारुह्य गम्यतामस्मत्स्थानमिति । एवमुक्तोऽसावगमत् परं परितोषमाह च । साधु भद्र प्रियं ममेदं क्षिप्रं मां तत्र प्रापयेति । अथासौ शिशुमारस्तं विनाशधर्माणं विश्वासोपगतं वानरं पृष्ठे गृहीत्वा गच्छंश्चिन्तयामास । कष्टं भोः ।

स्त्रीकार्यमिदमत्यर्थं गरीयः सारमेव च ।
तदर्थं दारुणं कर्म निन्दामि च करोमि च ॥ १२ ॥

किं च

उपलनिकषं सुवर्णं पुरुषो व्यवहारनिकष उद्दिष्टः ।
धूर्निकषो गोवृषभः स्त्रीणां तु न विद्यते निकषः ॥ १३ ॥

अतः स्वीकृते मया मित्रवधः कर्तव्यः । एवं वदन् छिशुमारो वानरेणोक्तः । किं भवान् वक्ति । स आह न किंचिदिति । ततस्तदकथनाज्जातविकारो वानरश्चाचिन्तयत् । शिशुमारो यन्मया पृष्टो न किंचिदूचे किमत्र कारणम् । तदहं प्रज्ञया तस्यान्तर्गतमाकर्षयामि । इति संचिन्त्य पुनरपि सनिर्बन्धं तमपृच्छत् । स आह । मम भार्याऽशक्यव्याधिपीडिता तेनाहं विमना इति । वानर आह । भिषङ्मन्त्रिजापात् पुष्ट्या न किंचित् प्रतिक्रियते । शिशुमारेणोक्तम् । पृष्टास्तेऽप्याहुः । वानरहृदयव्यतिरेकेण न जीवतीति । तच्छ्रुत्वा वानरः स्वात्मानं गतासुमिव मन्यमानः स्वगतमचिन्तयत् । कष्टं नष्टोऽस्मि । वृद्धत्वेऽप्यजितेन्द्रियत्वफलमनुभवामि । किं च,

वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम् ॥ १४ ॥

इत्यालोच्य शिशुमारमाह । भद्र न शोभनमाचरितं त्वया । यद्येवं तत्किं प्रथममेव त्वया मे न कथितम् । अहं हृदयं तत्रैव स्थापयित्वा समागतः । तद्गृहीत्वागमनमुचितम् । उक्तं च

धर्ममर्थं च कामं च त्रितयं योऽभिवाञ्छति ।
सोऽरिक्तपाणिः पश्येत ब्राह्मणं नृपतिं स्त्रियम् ॥ १५ ॥

असावाह । क तद्धृदयम् । वानरोऽब्रवीत् । तस्मिन्नेवोदुम्बरे । वानरहृदयं च सदा तरुषु तिष्ठतीति प्रसिद्धम् । एतदर्थं यदि कारणं भवतस्तन्निवृत्य हृदयं गृहीत्वागम्यताम् । तच्छ्रुत्वा शिशुमारः सानन्दं प्रतिनिवृत्य तीरं गतः । अथ बहुमनोरथो वानरः ससंभ्रममुत्प्लुत्योदुम्बरशाखां समधिरूढो हन्त लब्धाः प्राणास्तावदिति चिन्तयंस्तिष्ठति । शिशुमारस्त्वधस्तादब्रवीत् । भद्र तद्धृदयं गृहीत्वा शीघ्रमागच्छ । स विहस्याह । न पुनरागमिष्यामि । विज्ञातं मया सर्वम् । एतद्बुद्धिपूर्वं वाक्यं मयोक्तम् । गम्यतां रे मूर्ख किं शरीराद्बहिर्हृदयं तिष्ठति ।

शाठ्यादिच्छसि मां हन्तुं प्रतिशाठ्यं कृतं मया ।
मायां तु भवतः कृत्वा मृत्योरात्मा विमोचितः ॥ १६ ॥

तं च तस्य चित्तनिश्चयं ज्ञात्वा शिशुमारोऽब्रवीत् । भद्र हृदयं यदि नास्ति तथाप्यागच्छाहमन्येनौषधक्रमेण तस्या व्याधिप्रतीकारं करिष्ये । वानरोऽब्रवीत् । दुष्ट नाहं गर्दभः ।

आगतश्च गतश्चैव गत्वा यः पुनरागतः ।
अकर्णहृदयो मूर्खस्तत्रैव निधनं गतः ॥ १७ ॥

स आह । कथं चैतत् । वानर आह ।

## अथ कर्णहृदयविहीनगर्दभकथा नाम प्रथमा कथा ।

अस्ति कस्मिंश्चिद्वनोद्देशे सिंहः प्रतिवसति स्म । तस्य चैको गोमायुरनुचरः । स च सिंहः कदाचित् कुक्षिरोगाभिभूतोऽकिंचित्करः संवृत्तः । क्षुत्क्षामकण्ठेन च गोमायुनाऽभिहितः । देव कथमस्माकमव्यापाराणां प्राणयात्रेति । सोऽब्रवीत् । भद्र । अयं व्याधिः केवलं गर्दभकर्णहृदयेन भैषजेन निवर्तते । अन्यथा न । अतो मे महता यत्नेन गर्दभं त्वमानय । स आह । यथाऽज्ञापयति स्वामी । इत्युक्त्वा गत्वा नगरसमीपे रजकस्य गर्दभं दृष्ट्वाह । भद्र किमसि कृशः । सोऽब्रवीत् । वयस्य महता वस्त्रभारेण प्रतिदिवसं जीवामि । न चाहारमस्माद् दुरात्मनो लभेऽहमिति । सोऽब्रवीत् । किमनया यातनया । अहं भवन्तं तत्र नयामि यत्र भवान् स्वर्गगतमिवात्मानं मन्यते । सोऽब्रवीत् । कथय कथम् । स आह । अस्यां वनराज्यां मरकतसदृशशष्पप्रायायां नदीसनाथायामभिनवयौवनसंपन्नास्तिस्रो रूपवत्यो रासभ्योऽदृष्टपूर्वा अपि मन्येऽनेनैव निर्वेदेनापक्रान्ताः । तासामहं भवन्तं मध्ये प्रापयामीति । तच्च श्रुत्वा तथा नामेति प्रतिपन्नः । उपनीतश्च सिंहान्तिकं मूर्खः । क्रमप्राप्तं च तं रासभं दृष्ट्वातिहर्षमुत्प्लुत्य सिंहेनाक्रान्तोऽपि गर्दभस्तस्याऽसामर्थ्यात् कथंचिदपेतोऽतीवत्रस्तहृदयः प्रतिनिवृत्यानवलोकयन् पलायितः । अथ गोमायुना सिंहोऽभिहितः । भोः किमेवंविधः प्रहारस्ते । यस्तावद्गर्दभमप्युपनीतं हन्तुमसमर्थः स त्वं कथं सपत्नाञ्जेष्यसि । स आह । असंशयमेतदेव । पुनस्तावदानीयतामधुना तं हनिष्यामीति । स आह । सञ्ज्ञो भवास्मिन्मया दृष्टापदानोऽपि प्रज्ञासामर्थ्यादानीतो यथा न पुनस्तथैव विक्रमिष्यसीति । विद्धस्

प्रायात् । गर्दभसकाशं गत्वाब्रवीत् । किं । भवान् प्रतिनिवृत्त इति । स आह । महाननर्थो मे समुत्पन्न आसीत् । न जाने गिरिशिखराकारं किमपि सत्त्वं ममोपरि निपतितं यथायुःशेषतयाहमपेतस्तस्मात् । स आह । न त्वया विदितम् । उक्तं च

प्रायेण तु नृणां लोके त्रिवर्गमभिवाञ्छताम् ।
असन्तोऽपि हि वै विघ्ना उत्पद्यन्ते स्वभावतः ॥ १८ ॥

सा रासभी विहिताद्भुतशृङ्गारा त्वामवलोक्य सानुरागालिङ्गितुमुत्थिता त्वं च कातरतया नष्टः । सा पुनर्न शक्ता त्वां विना स्थातुं तया पुनर्नश्यतो भवतोऽवलम्बनार्थं हस्तः प्रसारितः । न चान्यदत्र कारणम् । तदागच्छ । एतच्छ्रुत्वा गर्दभ आह । त्वया सह गच्छामीत्युक्त्वा गोमायुना पुनर्नीतस्तेन सिंहेन गृहीत्वा व्यापादितश्च । ततस्तं हत्वा सिंह आह । भद्र । अयमौषधोपयोगो देवार्चनादि कृत्वोपयुज्यते । ततः सिद्धिं करोति । यतस्त्वमेवं निभृतो भूत्वाभिरक्ष यावदहं स्नात्वा नित्यकर्म कृत्वागच्छामीत्युक्त्वा गतः । गते च सिंहे गोमायुना महौषधमिति मत्वातिलौल्याद् गर्दभकर्णहृदयं स्वयमेव भक्षितम् । भक्षयित्वा सुपरिमृष्टवक्त्रचरणोऽवस्थितः । स्नात्वागतश्च सिंहः प्रदक्षिणं कुर्वन्न दृष्टवान् कर्णौ हृदयं च । आह च । किमिदं वृत्तम् । कथय क्व कर्णहृदयमस्य । गोमायुराह । स्वामिन् कुतोऽस्य मूर्खस्य कर्णहृदयम् । यस्य खलु कर्णहृदयमस्ति स किमेवंविधो भवति । आगतश्च गतश्चेति । ततः सिंहस्तूष्णीं स्थितः ।

## इति प्रथमा कथा समाप्ता ।

अतोऽहं ब्रवीमि । नाहं गर्दभ इति । तद्गच्छतु भवान् । नाहं त्वया पुनः प्रतारयितुं शक्यः ।

[illegible] कृतकवचनैः कार्यारम्भैस्त्वयाप्यनुवर्तितं
निभृतनिभृतैः प्रज्ञादोषैर्मयाप्युपलक्षितम् ।
अतिशयगुणं त्वत्पाण्डित्यं मयाप्यनुवर्तितं
कृतकवचनैः कालो नीतः समेन समं गतम् ॥ १९ ॥

साधु चेदमुच्यते ।

यान्येव बुद्धिस्खलितानि नूनं
तान्येव बुद्धेः प्रतिबोधितानि ।
मनस्विनां तत्त्वविदां मनांसि
भिषग्वराणीव चिकित्सयन्ति ॥ २० ॥

अथ शिशुमारो बलीवदनकं प्रज्ञाकौशलविनिश्चितमना एवमाह ।

मौर्ख्यं प्रख्यापयन्ति स्वं परं प्राज्ञं वदन्ति तु ।
धीराः स्वेषु तु कार्येषु भवन्त्यस्खलितोद्यताः ॥ २१ ॥

इत्युक्त्वा निहताशः स्वमालयमगात् ।

इति लब्धनाशं नाम चतुर्थं तन्त्रं समाप्तम् ॥



## अथापरीक्षितकारित्वं नाम पञ्चमं तन्त्रम् ।

अथेदमारभ्यतेऽपरीक्षितकारित्वं नाम पञ्चमं तन्त्रम् ।यस्यायमाद्यः श्लोकः।

योऽर्थतत्त्वमविज्ञाय वशं क्रोधस्य गच्छति ।
सोऽचिराद्ध्रश्यते मित्राद्ब्राह्मणो नकुलादिव ॥ १ ॥

राजकुमारा ऊचुः । कथं चैतत् । विष्णुशर्माऽब्रवीत् ।

अस्ति गौडदेशे कश्चिच्छुभगोत्रो देवशर्मा नाम ब्राह्मणः प्रतिवसति स्म। तस्य च भार्या यज्ञदत्ता नाम ब्राह्मणी । सा कदाचित् प्राक्तनपुण्यवशाद्गर्भिणी संवृत्ता । तां च दृष्ट्वा देवशर्मा परं परितोषमुपागतः । एवं चाचिन्तयत् । महन्मे कल्याणमुपस्थितमपत्यलाभाय । ब्राह्मणीं चाब्रवीत् । भद्रे कृतार्थासि दारकं जनयिष्यसि तस्याहं बहुमनोरथो गर्भाधानजातकर्मनामकरणादिसंस्कारान् करिष्ये । स च मे गोत्रधरो भविष्यतीति । एवं ब्राह्मण्यभिहिताब्रवीत् । को जानाति दारको भविष्यति न वेति । तन्न युक्तमेवमदृष्टेऽपि च वक्तुम् । नादावेव मनोरथः कार्यः । उक्तं च

अनागतवतीं चिन्तां यो नरः कर्तुमिच्छति ।
स भूमौ पाण्डुरः शेते सोमशर्मपिता यथा ॥ २ ॥

सोऽब्रवीत् । कथं चैतत् । साह ।

### अथ मनोरथध्यानकारकब्राह्मणकथा नाम प्रथमा कथा ।

अस्ति कश्चिद्विद्याभ्यासी ब्राह्मणसूनुः । तस्य कस्मिंश्चिद्वणिग्गृहे नैत्यकं भोजनं वर्तते । स च यदा तत्र न भुङ्क्ते तदा सक्तुसेतिकां लभते ।तां चावासं नीत्वा घटे प्रक्षिप्य स्थापयति । एवं च तस्य बहुना कालेन स घटः सक्तुभिः संपूर्णः । कदाचित्तस्य घटस्य नागदन्तके स्थापितस्याधस्ताच्छयनगतोऽसौ ब्राह्मणो दिवासुप्तप्रतिबुद्धः । एवं च चिन्तयामास । महार्घं धान्यं वर्तते किमुत कृतान्नं सक्तवः । तन्मे विंशतिमात्रकाणां रूपकाणां सक्तवः सन्ति । तांश्चाहं विक्रीय द्विरूपकाश्छागलिका दशमात्रा उपावर्तयिष्यामि । षण्मासाश्च प्रसविष्यन्ते । तासां चापत्यानि तथैव प्रसविष्यन्ते ।

पञ्चाब्दानन्तराच्च चतुःशतसंख्या वह्वयो भविष्यन्ति । लोके च श्रूयते चत-स्रृभिरजाभिरेका धेनुस्तरुणी जीववत्सा बहुक्षीरा सर्वगुणसंपन्ना लभ्यते । सोऽहं ताभिरजाभिरेव गवां शतं परिवर्तयिष्यामि । तासां च प्रसवापन्नानां वलीवर्दाः केचिद्भविष्यन्ति । तैश्चाहं कृषिं कृत्वा बहु सस्यमुत्पादयिष्यामि । तस्य विक्रयात् प्रभूतं सुवर्णं भविष्यति । शोभनं चेष्टकाचितं वेश्म प्राकाराभ्यन्तर्हितं करिष्यामि । दासीदासबहुलां सर्वोपस्करसंपन्नां च तां मम महतीं संपदं दृष्ट्वावश्यं कश्चिद्योग्यतमो ब्राह्मणः सुरूपां कन्यां मे दास्यति । तस्यां च कालेनास्म-द्भाग्योपबृंहितं दीर्घायुषमरोगं वंशधरं दारकं जनयिष्यामि । तस्य चाहं यथाविधि जातकर्मादि कृत्वा सोमशर्मेति नाम करिष्यामि । वल्गति च दारके ब्राह्मणी गृहकर्मव्यग्रा गवामभ्यागमनकाले सम्यग् दारकं प्रमादान्ना-भिरक्षयिष्यति । तदा तामहं ब्राह्मणीं पुत्रस्नेहाभिभूतहृदयो लगुडेनोद्यम्य ताडयिष्यामि । एवं तेन ध्यानस्थितेन लगुडं भ्रामयित्वाभ्याहतोऽसौ घटो येन तस्यैवोपरि शतकपालभग्नो व्याविद्धसक्तुर्निपतितः । ततोऽसौ ब्राह्मणः सक्तुधूलीधूसरिततनुः स्वप्नप्रतिबुद्धमिवात्मानं मन्यमानः परं वैलक्ष्यं जन-हासं चोपगतः ।

## इति प्रथमा कथा समाप्ता ।

अतोऽहं ब्रवीमि । अनागतवती चिन्ता न कार्या । दृष्टे कार्ये क्रिया-वर्तते । न भित्तिं विना चित्रकर्मेति । संपूर्णे च प्रसवकाले प्रसूता ब्राह्मणी शुभ-लक्षणं दारकम् । अथ जातं दशदिवसोत्थाने च कृतकर्माणं दारकं परिरक्षार्थं पितरि विन्यस्य ब्राह्मण्यशुचिवस्त्रशोधनायात्मनः शौचनिमित्तं संनिकृष्टां सरितं गता । ब्राह्मणोऽपि दारिद्र्यदोषासहायतया चात्मनैव धृतस्तं बालमभि-रक्षितवान् । अथ राजकुलात् पर्वके प्रवचनकरादाननिमित्तं ब्राह्मणस्याह्वायिका राजमाहिष्या दास्यनुप्रेषिता । शब्द्यमानोऽसौ ब्राह्मणः सहजदारिद्र्यसंतप्तश्चाचि-न्तयत् । यदि सत्वरं न गच्छामि तदा कश्चिदन्यः श्राद्धं गृह्णाति । दारकस्य रक्षको नास्ति । किं करोमीति । एवमवस्थिते यस्तस्याभिहोत्रशरणे गृहे पुत्र-निर्विशेषो नकुलो धान्यकणादिभिः संवर्धितस्तमेवावस्थाप्य गतोऽसौ ब्राह्मणः । नकुलोऽप्यचिरादपश्यत् कृष्णसर्पं क्षितिविवरान्निर्गतं बालकस्या-

भ्याशमायान्तम् । तं च दृष्ट्वा क्रोधसंरक्तनयनाऽतीवस्फुरद्वदनदशनचरणः सहसोत्पत्य तस्योपरि संनिपतितः खण्डशश्च तं कृत्वासृग्दिग्धवक्त्रचरण एवायान्तं ब्राह्मणं दृष्ट्वा सुपरितुष्टमनास्तन्निवेदनाय बहिर्निश्चक्राम । अथासावपरीक्षितकारी ब्राह्मणस्तं नकुलं रुधिररञ्जितमुखं दृष्ट्वाचिन्तयत् । कथं भक्षितोऽनेन मम पुत्रक इति याष्टिकया तं जघान । हत्वा तमनन्तरं यावदसौ ब्राह्मणो गृहमनुप्रविष्टस्तावदव्यङ्गं तथैव सुप्तं पुत्रकं कृष्णसर्पं च समीपे खण्डीकृतं दृष्ट्वा हा हतोऽस्मि मन्दबुद्धिः किमिदमकृत्यं मया कृतमिति स्वहृदयमताडयत् । आगता च ब्राह्मणी रुदन्तं ब्राह्मणं पश्यन्ती व्यापादितं नकुलं शतधा खण्डीकृतं सर्पं च दृष्ट्वा तं ब्राह्मणमाह । किमिदं ब्राह्मण कथं चेति । यतो ब्राह्मणः सर्ववृत्तान्तमाख्यातवान् । प्रेक्षावती ब्राह्मणी परं विषादमुपगता ब्राह्मणमाह ।

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
पुरुषेण न कर्तव्यं नापितेन यथा कृतम् ॥ ३ ॥

स आह । कथं चैतत् । साब्रवीत् ॥

## अथ श्रमणकघातकनापितकथा नाम द्वितीया कथा ।

अस्ति कस्मिंश्चिन्नगरे भूतपूर्वो वणिक्पुत्र उत्सन्नधनवंशविभवो दारिद्र्याभिभूतः शीर्णगृहदेशे वृद्धधात्रीसमेतो बालभावादारभ्य तया वृद्धदास्या धात्र्या संवर्धितः । प्रथमप्रदोष एव स चोष्णं दीर्घं च निःश्वस्याचिन्तयत् । कष्टमिदं दारिद्र्यं कियत्कालावधि स्यात् । इति ध्यात्वा रात्रौ सुप्तः । स च निशावसाने स्वप्नं दृष्टवान् । आगत्य भिक्षुत्रयेण प्रबोध्य समभिहितो यथा । भद्र प्रभातसमये वयमनेनैव रूपेणागमिष्यामः यत्कारणम् । तव पूर्वपुरुषैरवस्थापितास्त्रयो निधयः । लगुडेन त्वदभ्याहताश्च दीनारा भविष्यामः । न च त्वयात्र करुणा कर्तव्येति । एवं तं स्वप्नमनुचिन्तयन्नेव प्रभातसमये प्रतिबुद्धो धात्रीमभिहितवान् । अद्याम्ब त्वया नित्यं प्रयतया भवितव्यं गोमयसंमार्जनादि परिकर्म वेश्मनि कार्यं यथासंभवं ब्राह्मणत्रयस्य भोजनं दातव्यम् । अहमपि नापितमानयामीति । तथा चानुष्ठिते श्मश्रुनखलुञ्चनार्थं नापित आगतः । कृताचारे श्मश्रुकर्मणि स्वप्नदृष्टा उपायाताः ।

अथ वणिक्पुत्रस्तान् क्षपणकान् दृष्ट्वा यथादिष्टमनुष्ठितवान् । धनराशयश्च ते संपन्नाः । प्रवेश्यमाने च तस्मिन् धनौघे सार्थवाहपुत्रेण दीनारशतत्रयमात्रं परितोषणाय रहस्यसंरक्षणाय च दिवाकीर्तये दत्तम् । नापितोऽपि तं दृष्ट्वा कुपरामर्शात् स्वगृहं गत्वा चिन्तयत् । अहमपि क्षपणकत्रयं लगुडेन व्यापाद्य निधित्रयं करिष्यामीति । ततोऽसौ लगुडं गृहीत्वावहितः स्थितः । अनन्तरं कर्मवशाद्भिक्षुत्रयं भिक्षार्थमागतम् । ततो लगुडेन ताडयित्वा नापितेन व्यापादितं च । न च निधिर्लब्धः । अनन्तरं राजपुरुषैराकृष्य नीत्वा नापितः शूले निक्षिप्तः ।

इति द्वितीया कथा समाप्ता ।

अतोऽहं ब्रवीमि । कुदृष्टं कुपरिज्ञातमिति । तस्मात्त्वमपि तादृश एव मूर्खः । अतो मतिमतां सर्वाणि कार्याणि सुपरीक्षितान्येव करणीयानि ।

इत्यपरीक्षितकारित्वं नाम पञ्चमं तन्त्रं समाप्तम् ॥

इति पञ्चतन्त्रं समाप्तम् ॥

# INDEX OF VERSES IN पञ्चतन्त्रम्

( *Roman figures are for the Tantras and arabic ones for verses.* )

---

# CORRIGENDA

Page and line

12,29 Add I at end of line
14. 6 Read शिबिरमनुप्रविष्टः
15.26 „ द्विमोच्य कामुक०
21.17 „ द्विगुणतरो
24.17 „ त्रिवर्गहानिकरम्
25.20 „ रूक्षाणि
50.22 „ पश्यतीहामिषं
51.25 „ त्वत्सकाशादृष्ट्वा
52. 7 „ इवानघ
52.18 Add I before भद्र

Page and line

52.29 Read मय्यत्येका०
53.16 „ विश्वसति
54.16 „ विरोद्धारं
55. 1 „ किंनिमित्तम्
55,10.11 „ तं विपुलं ह्रदं
55.20 Add I after वयस्य
56.14 Read बृहत्स्फिग् नाम
63. 5 Add I at end of line
64.18 Delete I, & read I for II
64.19 Delete I

# Oriental Book Agency, Poona 2.

## Our Own Publications.

| | | Rs. | As. |
|---|---|---|---|
| 1 | **Abhyankar V. & Deodhar C. R.**—*Nyayasara* (न्यायसार) of Acharya Bhāsarvajna with the Nyāyasārapadapañchikā of Vāsudeo of Kāshmir. Critically edited with Notes including Translation. 1922. Cr. pp. 5, 98, ii, 98. ... ... | 2 | 8 |
| 2 | **Belvalkar S. K.**—*Brahmasutras* (ब्रह्मसूत्र) of Bādarāyaṇa with the Comment of Saṅkarāchārya, Chapter II, Quarters I & II, Edited in the original Sanskrit with notes and English Translation. 1923. Demy, pp. 51, 112, 44, 226. ... | 6 | 0 |
| 3 | " —*Systems of Sanskrit Grammar*, being the Viswanāth Nārāyan Maṅdlik Gold Medal Prize-Essay for 1909. It gives an account of the different existing systems of Sk. Grammar. 1915. Demy, pp. 8, 148. ... ... ... | 3 | 0 |
| 4 | " —*Kavyadarsa* (काव्यादर्श) of Daṅdin, Sanskrit Text and English Translation. 1924. Demy pp. 8, 47, 82.... ... ... ... ... | 3 | 0 |
| 5 | " —*Rama's Later History* or *Uttara-Ram-Charit*, (उत्तररामचरित). An ancient Hindu Drama by Bhavabhūti. Translated from the original Sanskrit and Prakrit into Marāthi, with Introtion and Notes. 1915. pp. 276. ... ... | 2 | 0 |
| 6 | " " Sanskrit Text only. 1921, Demy. pp. 107. | 1 | 4 |
| 7 | " —*Four Unpublished Upanisadic* Texts. [BĀṢKALA, (बाष्कल,) (CHĀGALEYA, ) (छागलेय ) ARṢEYA, (आर्षेय) and SAUNAKA (शौनक) ]. Tentatively Edited and Translated for the first time. 2 *The Paryanka-Vidya*, (पर्यंकविद्या.) *Kausitakyupanisad*, (कौपीतक्युपनिषत्) Chap. I ... | 1 | 0 |
| 8 | " —*Mathara-Virtti*, (माठरवृत्ती) an essay on, (Comm. on Sāṅkhva-Kārikas by Māṭhara ) 1924. pp. 36. | 1 | 0 |
| 9 | " —*Commemorative Essays*. Presented to Sir Ramkrishṇa Gopal Bhandarkar upon the completion of his 80th Year on Friday the 6th of July 1917, by his Friends, Pupils and Admirers from different Lands, as a mark of Respect and Affection. 1917. Royal Pp. 8, 455. Library & Ordinary eds. | 16 &.12 | 0 |
| 10 | **Chandavarkar G. A.**—*A Manual of Hindu Ethics*, with an Intro. by Principal Ram Deva. 1925. 3rd ed. revised and enlarged pp. 17, 190. ... | 1 | 4 |